 

श्रीगणेशायनमः श्रीशुकउवाच हेराजन् अस्तिःप्राप्तिश्च कंसस्यस्त्रियौ भर्तरिमृतेसतिदुःखार्तेपितुः गृहंजग्मतुः न
नःजरासंधायस्ववैधव्यकारणंवेदयांचक्रतुः ततोजरासंधः क्रुद्धःसन् महीं अयादवीं कर्तुंउद्यमंचक्रे ततःत्रयोविंशत्यक्षौहिणी
भिर्युक्तःसः मथुरांरुरोध ततःश्रीकृष्णःतद्बलंतेनरुद्धं स्वपुरं भयाकुलं स्वजनंच दृष्ट्वाचिंतयामास किंततत् इदंभूभारभूतंसै
न्यंहनिष्यामि मागधस्तुनहंतव्यो भूयः कर्ताबलोद्यमम् मे अवतारः भूभारहरणार्थे वास्ति एवं गोविंदे ध्यायतिसति आका-
शात् ससूतौध्वजकवचादियुक्तौ द्वौरथौप्राप्तौ तथा आयुधानिच प्राप्तानितानि दृष्ट्वा केशवः रामं अब्रवीत् हेआर्य यदूनांप्र
संव्यसनंपश्य तथाएषःरथः आयुधानिच आयातानि पश्य अधुनारथमास्थाय एतत् सैन्यंजित्वाव्यसनात् स्वान्उद्धर नौ
जन्मएतदर्थं किंच त्रयोविंशत्यक्षौहिणीमितं भूमेर्भारं अपाकुरु एवंसंमंत्र्यतौ रामकृष्णौ स्वायुधाढ्यौ अल्पसैन्यावृतौ संतौर
थाभ्यांपुरात्निर्जग्मतुः ततःहरिः शंखंदध्मौ तेननादेन शत्रुसैन्यानांहृदिकंपोऽभूत् ततःमागधः तौप्रति आह हेकृष्णबालेन-
त्वयासहयोद्धुंनेच्छामिकुतः त्वंबंधुहंतासि अतोयाहि हेरामतवयुद्धेश्रद्धास्तिचेत् तर्हिधैर्यंधृत्वायुध्यस्व मयाजितश्चेत्
मच्छरैःछिन्नंदेहंहित्वास्वर्याहि अथवामांजहि श्रीभगवानुवाच हेमागधशूराःएवंनविकत्थंते पौरुषमेवदर्शयंति
अतःआतुरस्यतेवचोनगृण्हीमः श्रीशुकउवाच हेराजन् मागधःतौप्रतिगत्वा महाबलौघेन सैन्यस्यध्वजाश्वसूतैः
सहतौआवृणोत् तदापुराट्टालादिषुस्थिताःस्त्रियः रामकृष्णरथौनपश्यंत्यःसत्यः शुचार्दिताःमुमुहुः तदाश्रीकृष्णःस्वसैन्य
शत्रुसैन्यशरैःपीडितंदृष्ट्वास्वशार्ङ्गंधनुःउज्जृंभितवान् ततःनिषंगात् शरान्गृहीत्वागुणेसंधायतीक्ष्णबाणौघान्मुंचन्सन् रथ १
गजाश्वपदातीन् जघान तदागजाःनिर्भिन्नकुंभाःपेतुः अश्वाःछिन्नग्रीवाःरथाःहताश्वध्वजसूतनायकाःपेतुःपदातयःछिन्नभुजो

ओ॰ ६ मातृभ्राता॰ ओ॰ ५ श्लाघंते॰

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

रुग्रावाः पेतुः एवं छिन्नदेहानां तेषां अंगेभ्यः प्रसूताः रुधिरनद्यः परस्परं मिलिताः आसन् तासु वहमानाः भुजाः सर्पाः शिर्षाणि कच्छ
पाः गजाः द्वीपानि अश्वाः नक्राः करा उरवश्च मीनाः नृकेशाः शैवलानि धनूंषि तरंगाः आयुधानि गुल्माः चर्माणि आवर्ताः मणयः वा
लुकाः ततः एवं संकर्षणेनापि तद्बलं क्षयं नीतं तत् वसुदेवपुत्रयोः परं विक्रीडनं न तु पराक्रमः अहो यः त्रिभुवनस्य स्थित्यादि स्व-
लीलयैव विधत्ते तस्य शत्रुपक्षनिग्रहः चित्रं न ततो रामेण विरथं जरासंधं वारुणैः पाशैर्बध्यमानं दृष्ट्वा गोविंदः वारयामास एवं
लोकनाथाभ्यां मुक्तः सः लज्जितो भूत्वा तपसे कृतसंकल्पः सः पथिनीतिवाक्यैः राजभिर्वारितः सन् दुर्मनाः मागधान्ययौ ततः अ
क्षीणबलः कृष्णः देवैः पुष्पैः विकीर्यमाणः प्रत्युद्यतैः मथुरास्थजनैः मिलित्वा स्वलंकृतां मथुरां प्रविश्य रणगतं वित्तं यदुराजाय ददौ ए
वं स सदश वारान् युयुधे अष्टादशसंग्रामे भाव्ये सति तन्मध्ये नारदप्रेषितः कालयवनः एत्य तिसृभिर्म्लेच्छकोटिभिः मथुरां रुरो-
ध तं दृष्ट्वा रामकृष्णौ अचिंतयताम् अहो यदूनां उभयतो दुःखं प्राप्तं तदाह अद्य श्वः परश्वो वा मागधः एष्यति अनेन आवयोर्युध्यतोः
सतोः जरासुतः यदि आगमिष्यति तर्हि बंधून् वधिष्यति वा स्वपुरं नेष्यति तस्मात् अद्य द्विपदद्दुर्गमं दुर्गं कृत्वा तत्र ज्ञातीन् संस्थाप्य
यवनं घातयामहे इति संमंत्र्य भगवान् समुद्रमध्ये द्वादशयोजनं दुर्गं तन्मध्ये सर्वाश्चर्यमयं चातुर्वर्ण्यजनाकीर्णराजगृहे रुल्लसत्
नगरं कारयामास यत्र त्वष्टुः क्रियाकौशलं दृश्यते ततः इंद्रः हरेः सुधर्मां सभां पारिजातं च प्राहिणोत् वरुणः श्यामैककर्णान् अश्वा
न् कुबेरः अष्टौ निधीन् अन्ये लोकपालाः निजविभूतीः अन्ये च सिद्धादयः भगवता स्वाधिकारसिद्ध्ये यद्यदाधिपत्यं दत्तं तत्सर्वं प्र-
त्यर्पयामासुः ततः श्रीकृष्णः योगप्रभावेण तत्र सर्वजनं नीत्वा रामेण सह संमंत्र्य निरायुधः सन् पुरद्वारान्निर्जगाम ५८ इ-
ति दशमे पंचाशत्तमः ५० श्रीशुक उवाच ततः पुरद्वारान्निर्गतं श्यामं श्रीवत्सवक्षसं पीतांबरं चतुर्भुजं श्रीकृष्णं वीक्ष्य

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

नारदोक्तैर्लक्षणैः अयंवासुदेवइतिज्ञात्वा अयंनिरायुधः अतोहमपिनिरायुधः सन् अनेनसहयोत्स्यामीतिनिश्चित्यसः यवनःप्रा
द्रवंतंश्रीकृष्णंजिघृक्षुःसन् अन्वधावत् ततःआत्मानंहस्तप्राप्तमिवदर्शयताहरिणादूरंगिरेः गुहांनीतःततः तेनयवनेनयदुकुले
जातस्यतवपलायनंनोचितं एवंक्षिप्तोपिकृष्णःगुहांप्राविशत् सोपितदनुगुहांप्रविष्टःसन् तत्रअन्यंनरंशयानंदृष्ट्वाकृष्णएवायं
इतिमत्वातंपदाअताडयत् ततःसःनरःउत्थायनेत्रेउन्मील्यपार्श्वेतंयवनंअपश्यत् ततःक्रुद्धस्यतस्यदेहजेनाग्निनाभस्मसात्
अभवत् राजोवाच हेब्रह्मन् सःपुमान्कः कुतःगुहांशिश्यें तत्कथय श्रीशुकउवा॰ हेराजन् सः इक्ष्वाकुकुलजस्य
मांधातुःपुत्रःमुचुकुंदइतिख्यातःसः देवैःस्वरक्षणेप्रार्थितःसन् चिरंरक्षांअकरोत् ततःतेदेवाःगुहं सेनान्यंलब्ध्वामुचुकुंदमू
चुः हेराजन् नःपालनात् विरम्यतांअस्मान् पालयतः तवसर्वेकामाःउज्झिताः तवस्त्रीपुत्रादयोपि अधुनानसंति तवभद्रमस्तु
वरंवृणीष्व एवंदेवैरुक्तःमुचुकुंदः तान्नत्वागुहांप्रविष्टःसन् देवदत्तयानिद्रयाअशयिष्ट मुचुकुंदंप्रतिनिद्रांदत्वा देवाऊ-
चुः हेराजन् सुप्तंत्वांमध्येयः बोधयेत् सः त्वयादृष्टमात्रःसन् भस्मीभवतु एवंयवनेभस्मीभूतेसतिहरिः मुचुकुंदायआत्मा
नंअदर्शयत् तंचतुर्भुजंश्यामंश्रीवत्सकौस्तुभादिभिर्विरोचमानंदृष्ट्वा शनैःउवाचकः त्वंइहसंप्राप्तः त्वंसूर्यः किंवाअग्निःचंद्रः
इंद्रोलोकपालोवात्वांब्रह्मादीनांमध्येविष्णुंमन्ये यतःगुहाध्वांतंनाशयसि अतःशुश्रूषतांनः स्वजन्मकर्माणिवद अहंतुइक्ष्वा
कुकुलोत्पन्नस्ययौवनाश्वस्यपुत्रःमुचुकुंदः अस्मि किंच अहंचिरप्रजागरश्रांतःसन् अस्यांशयेअधुनाकेनापि उत्थितःसोपि
भस्मीकृतः अनंतरंत्वांअपश्यं इदानींत्वत्तेजसात्वांद्रष्टुंनशक्नोमि एवमुक्तोभगवानाह श्रीभगवानुवा॰ मेजन्मकर्मा- २
णिसहस्रशः संति अतःसंख्यातुंनशक्यंते तथापि अद्यतनानिनामानि शृणुष्व पुराब्रह्मणाभूभारहरणार्थं धर्मगुप्तयेचप्रार्थि

ओ॰५ शयनंकृतवान्, ओ॰७ गताः,

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

तोहं यदुकुले वसुदेव गृहे जातः अतो मां वासुदेव इति वदंति मया कालनेमिर्हतः कंसः प्रलंबाद्याश्च सद्विषः अयं यवनोपि ते चक्षुषा द-
ग्धः सोहं तव अनुग्रहाय गुहां प्राप्तः वरान् वृणीष्व भद्रं ते सर्वान्कामान्ददामि ते मां प्राप्तो जनः पुनः शोचितुं नार्हति श्रीशुकउवाच
इत्युक्तः मुचुकुंदः तं नारायणं ज्ञात्वा प्रणम्याह . मुचुकुंदउवा० हे भगवन् अयं जनः त्वन्मायामोहितः सन् त्वां न भजते किंच अत्र
मानुषं जन्म प्राप्य तव पादकमलं न भजति यः सः पशुरेव किंच श्रीमदांधस्य गृहासक्तस्य मम कालः निष्फलो गतः किंच अस्मिन्
शरीरे राजाहं इत्यभिमानेन त्वां अविगणय्य विषयेषु लालसं मां अंतकस्त्वं अभिभवसि किंच यः राजा पुरा रथादिभिर्वृतः आसी
त् स एव कालेन कृमि विट् भस्म संज्ञः कृतः किंच यः राजा पूर्वं तुल्यराजभिर्वंदितः स एव स्त्रीगृहेषु क्रीडामृग इव इतस्ततो नीयते किं
च यः राजा पुनः राज्यप्राप्तये कर्माणि करोति सः प्रवृद्ध तृष्णः सन् सुखं नाप्नोति किंच भो अच्युत संसारे भ्रमतः जनस्य त्वत्कृपया
यदा संसार निवृत्ति र्भवति तदा सत्संगमः स्यात् ततः त्वयि भक्तिः ततो मुक्तिरिति किंच हे भगवन् मम तु सत्संगात्पूर्वमेव यो राज्या
दि संग विच्छेदो जातः सोयं त्वया महान् अनुग्रहः कृत इति मन्ये किंच हे विभो त्वत्पादसेवनात् अन्यं वरं न वृणे अतः आशिषस्त्यक्त्वा
निर्गुणं त्वां शरणं व्रजामि किंच इह संसारे अनुतापैस्तप्यमानोहं त्वां शरणं प्राप्तः अतो मां पाहि श्रीभगवानुवा० हे राजन् तव
मतिर्निर्मला यतः कामैर्न विहन्यते किंच मया वरैः प्रलोभितस्त्वं तत् अप्रमादाय विद्धि अतः मयि मनः निवेश्य महीं विचरस्व तव मयि
अव्यभिचारिणी भक्तिरस्तु त्वं क्षात्रधर्मेण जंतून् अवधीः तत्पापं तपसा जहि हे राजन् जन्मांतरे विप्रो भूत्वा मां प्राप्स्यसि ६४
इति दशमे एकपंचाशत्तमः ५१ श्रीशुकउवा० हे राजन् इत्थं कृष्णेन अनुगृहीतः मुचुकुंदः तं परिक्रम्य नत्वा च गुहायाः
निर्गत्य क्षुद्रान् मनुष्य पश्वादीन् दृष्ट्वा कलियुगं प्राप्तं ज्ञात्वा उत्तरां दिशं जगाम ततः कृष्णो मनः स माधाय नरनारायणालयं बद-

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

र्यथ्यमं प्राप्य तपसा हरिं आराधयत् तदा श्रीकृष्णः पुनः मथुरां एत्य यवनसैन्यं हत्वा तदीयं धनं द्वारकां निन्ये एतस्मिन्काले २३
अक्षौहिणीसैन्ययुतः जरासंधः आजगाम तत्सैन्यवेगं दृष्ट्वा वित्तं त्यक्त्वा रामकृष्णौ दुद्रुवतुः पलायमानौ तौ दृष्ट्वा मागधः प्रहस्य
रथानीकैः सह अन्वधावत् ततः तौ दूरं प्रद्रुत्य प्रवर्षणाख्यं गिरिं आरुहतां ततो मागधः तौ गिरौ लीनौ ज्ञात्वा तं गिरिं काष्ठैः संवेष्ट्य द
दाह ततः तौ ११ योजनोत्तुंगात् दह्यमानात् गिरितटात् अधः भुवि निपेततुः एवं रिपुणा अलक्ष्यमाणौ तौ द्वारकां पुनः आयातौ सो
पि मागधः तौ दग्धाविति मत्वा स्वबलं गृहीत्वा मागधान् ययौ हे राजन् श्रीमान् रैवतः ब्रह्मणा चोदितः सन् स्वसुतां रेवतीं बलाय
प्रादादिति नवमस्कंधे उक्तम् हे भारत भगवान् श्रीकृष्णोपि स्वयंवरे चैद्यपक्षीयान् शाल्वादीन् प्रमथ्य भीष्मकसुतां रुक्मि-
णीं राक्षसविधिना उपयेमे इति श्रुतम् राजोवाच हे शुक श्रीकृष्णः शाल्वादीन् जित्वा कन्यां यथा आहरत् तत् श्रोतुमि
च्छामि श्रीशुक उवाच हे राजन् विदर्भाधिपतिः भीष्मको नाम राजा आसीत् तस्य पंच पुत्राः एका कन्या च आसन् ते च
रुक्मी १ रुक्मरथः २ रुक्मबाहुः ३ रुक्मकेशः ४ रुक्ममाली ५ एषां स्वसा रुक्मिणी श्रीकृष्णगुणान् श्रुत्वा तं स्वयोग्यं पतिं मेने कृ
ष्णोपि स्वयोग्यां तां उद्वोढुं मनो दधे तां रुक्मिणीं कृष्णाय दातुं इच्छतः बंधून् निवार्य कृष्णाद्विट् रुक्मी चैद्यं वरं अमन्यत सा तत् ज्ञा
त्वा दुर्मना सती कंचन आप्तं द्विजं कृष्णाय प्राहिणोत् सः विप्रः द्वारकां एत्य द्वारपैः प्रवेशितः सन् सुवर्णासने स्थितं कृष्णं अपश्य
त् ततः कृष्णः ब्राह्मणं दृष्ट्वा आसनात् अवरुह्य तत्र तं उपवेश्य संपूज्य भुक्तवंतं विश्रांतं तं उपगम्य पाणिना पादौ संमर्दयन् सन् अ
पृच्छत् हे द्विज संतुष्टमनसः ते धर्मः अनिकृच्छ्रेण नवर्तते कच्चित् ब्राह्मणः संतुष्टश्चेत् तर्हि धर्मः तस्य कामधुक् भवति असं ३
तुष्टो विप्रश्चेत् लोकान् लोकांतरं पर्यटति अहं स्वलाभसंतुष्टान् शांतान् द्विजान् शिरसा नमस्ये हे द्विज राजतः वः कुशलं कच्चि

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

न् यस्यदेशेप्रजाः सुखंवसंति समेप्रियः हेद्विज यतस्त्वंआगतः तत् अगुह्यंचेत् सर्वंब्रूहितेकार्यंकिंकरवाम एवंपृष्टःविप्रः त
स्मैसर्वंअवर्णयत् रुक्मिण्युवाच हेकृष्णतवगुणान्रूपंचश्रुत्वामेचित्तंत्वयिआविशति किंच हेमुकुंदकुलशी-
लादिभिःस्वतुल्यंपतिंत्वांमहती कन्याकानवृणीत तस्मान्मयाभवान्वृतः तवदेहश्च अर्पितः अतःत्वमत्रागत्यमांभवतो
जायांविधेहि इमंतवभागंचैद्यः मास्पृशतु किंच मयापूर्तेष्टादिभिः भगवान् आराधितश्चेत्तर्हि अत्रैत्यमेपाणिंगृह्णातु ना
न्ये हेअजितश्वः भाविनिविवाहेप्रथमंगुप्तः एत्यपश्चात्सेनायुतः सन्चैद्यादिबलंनिर्मथ्यराक्षसविधिनामांउद्वह हेकन्ये
तवबंध्वादीन् अनिहत्यत्वांकथमुद्वहे इतिचेदुपायंवच्मिशृणु पूर्वेद्युःकुलदेवियात्राऽस्तितस्यांनववधूःगिरिजांउपेयात्
किंच यत्पादरजःप्रतिमहादयःपापहत्यैवांच्छंति तस्यभवतःप्रसादंअहंयदिनलभेयंतर्हिव्रतकृशान्प्राणान्त्यजेयम् विप्रउ
वाच हेभगवन् एतेगुह्यसंदेशाः मयाआहृताः यत् अत्रकर्तुंतत्विमृश्यक्रियताम् ४४ इतिदशमेद्विपंचाशत्तमः ५२ श्री
शुकउवाच हेराजन् सःकृष्णःएवंरुक्मिण्याःसंदेशंश्रुत्वाप्रहसन्निदमब्रवीत् श्रीभगवानुवाच हेद्विजअहमपितच्चि
त्तःसन् निशिनिद्रांनलेभे किंच रुक्मिणाद्वेषात् ममोद्वाहोनिवारितः तदपिअहंजानामि अतःमृधेराज्ञः उन्मथ्यमत्परांतांरुक्मिणीं
आनेष्यामि किंच श्रीकृष्णःरुक्मिण्याः विवाहर्क्षेपरश्वोरात्रौअस्तीतिज्ञात्वा सारथिंआह हेदारुकमेरथः आशुसंयुज्यताम् ततः
सःदारुकः अश्वैःयुक्तंरथंउपानीयअग्रतःप्रांजलिःसन्तस्थौ ततः शौरिःरथंस्वयं आरुह्यद्विजंचारोप्यतूर्णगैरश्वैः एकरात्रेण-
विदर्भदेशानगमत् राजाभीष्मकस्तुपुत्रस्नेहबद्धःसन् शिशुपालायस्वांकन्यांदास्यन् कर्माण्यकारयत् ततःपुरंचित्रध्वजपताका
तोरणस्त्रग्गंधमाल्याभरणवस्त्रादिभिः समलंकृतं कारयित्वापितृदेवविप्रानभ्यर्च्यविप्रान् भोजयित्वाकन्यांप्रति मंगलंवाचयि-

ओ॰ ३ पुरुगुरुणोदारा, ओ॰ ४ शिशुपालः, ओ॰ ८ करणीयम्, ओ॰ १२ शैब्यसुग्रीवमेघपुष्पबलाहकैः

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

बाणैः अश्वान् अष्टभिः सूतं द्वाभ्यां त्रिभिः ध्वजं विव्याध सत्त्वरुक्मी अन्यत् धनुरादाय पंचभिः शरैः कृष्णं विव्याध तदपि धनुः कृष्णः
चिच्छेद तदा कृष्णं प्रति परिघशूलखड्गशक्तितोमरान् चिक्षेप तान् कृष्णः चिच्छेद तदा रुक्मी रथादवप्लुत्य जिघांसया खड्गपाणिः
कृष्णं अधावत् तदा कृष्णः बाणेन खड्गं छित्वा तं हंतुं असिं आददे ततः रुक्मिणी भीता सती भर्तुः पादयोः पतित्वा करुणं उवाच हे भगव
न् मे भ्रातरं हंतुं नार्हसि एवं तया गृहीतचरणः हरिः वधात् निवृत्तः सन् तं वस्त्रेण बध्वा वपनं कृत्वा व्यरूपयत् ततः रामः कृष्णांति
कं आगत्य तथा भूतं रुक्मिणं दृष्ट्वा बद्धं तं विमुच्य कृष्णं अब्रवीत् हे कृष्ण त्वया इदं असाधु कृतम् हे साध्वि अस्मान् भ्रातु र्वैरूप्य
चिंतयामासूयेथाः यतः सुखदुःखदः अन्यो नास्ति किंच भ्राता भ्रातरं हन्यात् अयं क्षत्रियाणां धर्म एव हे देवि देहिनां आत्मा एक ए
व तस्मिन् अविद्यया क्लृप्तः देहः आत्मानं संसारयति जन्मादि विकारा अपि देहस्यैव नात्मनः अतः अज्ञानजं शोकं तत्त्वज्ञानेन निर्ह
त्य स्वस्था भव श्रीशुकउवाच एवं रामेण बोधिता रुक्मिणी खेदं त्यक्त्वा मनः समाहितं अकरोत् ततः रुक्मी शत्रुभिः उत्सृ
ष्टः सन् विरूपकरणं स्मरन् प्रतिज्ञापालनाय तत्रैव स्थित्वा स्वनिवासाय भोजकटं नाम पुरं चक्रे भगवान् रुक्मिणीं पुरं आनीय वि-
धिवत् उपयेमे तदा यदुपुर्यां गृहे गृहे उत्सवः आसीत् तदा नरा नार्यश्च मुदिताः सत्यः पारिबर्हं उपजह्रुः एवं साद्वारकातोरणैः पूर्णकुं
भादिभिश्च बभौ तदा कुरुसृंजयादयः मिथः समेत्य मुमुदिरे एवं रुक्मिण्याहरणं श्रुत्वा राजानो राजकन्याश्च विस्मिता बभूवुः त-
तः रुक्मिण्यायुक्तं श्रीकृष्णं दृष्ट्वा पौराणां हर्षोऽभूत् ६० इति दशमे चतुःपंचाशत्तमः ५४ श्रीशुकउवाच प्राक् रुद्रमन्युना
दग्धः कामः भूयः देहप्राप्तये वासुदेवं प्राप सएव रुक्मिण्या प्रद्युम्न इति प्रसिद्धः जातः तदा शंबरः तं बालकं आत्मशत्रुमिति ज्ञात्वा अ
निर्दशं तं हृत्वा समुद्रे प्रक्षिप्य गृहं ययौ तं मत्स्यः गिलितवान् समीनः अन्यैः सह कैवर्तैः धृतः तं शंबराय उपायनं ददुः ततः सूदाः तं

ओ·५ समर्पितवत्यः ओ·३।१ ननिर्गतानि दशदिनानि यस्य तं·

५

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

मत्स्यंमहानसंनीत्वाशस्त्रेणखंडितवंतः तदा तदुदरे बालं दृष्ट्वामायावत्यैन्यवेदयन् ततः नारदः तत्रागत्यबालस्यउत्पत्तिंमत्स्योदर
निवेशनंचतस्यैअकथयत् साचकामपत्नीरतिर्नाम्नीस्वपत्युः देहोत्पत्तिंप्रतीक्षंती शंबरेणसूपौदनसाधनेनियुक्तासतीशिशुंकामं
बुध्वास्नेहंचक्रे सः शिशुः स्वल्पकालेनप्राप्तयौवनः सन्नारीणांमोहंजनयामास ततःसातंनरलोकसुंदरंसैःरतैःभावैःउपतस्थे
तांप्रद्युम्नः आह हे मातः त्वंमातृभावंत्यक्त्वाकामिनीववर्तसे  रतिरुवाच  त्वंकृष्णसुतः शंबरेणअत्रानीतः अतः त्वंकामोसि
अहंतवपत्नीरतिः एषः शंबरः अनिर्दशंत्वांहत्वासिंधौप्राक्षिपत् तत्रत्वांमत्स्यः अग्रसीत् तदुदरात् इहत्वंप्राप्तोऽसि अतः इमंशत्रुं
जहि तवमाताकुररीवशोचति  श्रीशुकउवाच  हे राजन् एवंप्रभाष्यरतिःसर्वमायाविनाशिनींविद्यांप्रद्युम्नायददौ सचशंबरं
प्राप्य आक्षिपन् सन् युद्धायसमाह्वयत् तदा शंबरः गदापाणिः सन् गृहान्निर्गत्यगदयाप्रद्युम्नंआविध्यनादंअकरोत् ततःप्रद्युम्नो
पितांगदांअपास्यतंगदयाअताडयत् सचमायांआश्रित्यनभसिस्थितःसन् अस्त्रमयंवर्षमुमुचे ततःप्रद्युम्नःसात्त्विकींविद्यां-
प्रायुंक्त ततः दैत्यः गौह्यकगांधर्वपैशाचोरगराक्षसीः मायाःप्रायुंक्तताःसर्वाः कार्ष्णिः अनाशयत् ततः खड्गंगृहीत्वाशंबरस्यशिरः
अहरत् तदादेवैः पुष्पैः आकीर्यमाणः प्रद्युम्नः तयास्त्रियाविहायसापुरंनीतः ततःस्त्रियः तंचतुर्भुजंपीतांबरंरुचिराननंकृष्णं-
मत्वालज्जिताः सत्यः तत्रतत्रनिलिल्युः ततः ताःस्त्रियः किंचिद्भेदलक्षणयेनकृष्णोनेतिनिश्चित्यविस्मिताःसत्यः तत्समीपंआय
युः ततःरुक्मिणीनष्टंस्वसुतंस्मृत्वाआह कंजनेत्रः अयंकः कयावाजठरेधृतः अनेनकाइयंलब्धा ममनष्टः पुत्रःकुत्रजीवतिचे
त् वय आदिनाएतत्तुल्योस्ति अनेनकृष्णसारूप्यंकथंप्राप्तं तस्मात् यःमयागर्भेधृतःसएववाभवेत् यतःअस्मिन्मेअधिकाप्रीति
र्भवति एवंविचार्यमाणायांवैदर्भ्यांसत्यांवसुदेवदेवकीभ्यांसहकृष्णः आगत्यतूष्णींआसीत् ततोनारदः सर्वंअकथयत् त-

ओ॰५ द्वारकां, ओ॰१ रुक्मिण्यां॰

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

च्छ्रुत्वा कृष्णास्त्रियः अभ्यनंदन् ततः देवक्यादयः तौदंपती परिष्वज्य मुदं प्रापुः ततः नष्टं प्रद्युम्नं आयातमाकर्ण्य पौराः एतन्नु दिष्ट्या इति ब्रुवन् ४० इतिदशमे पंचपंचाशत्तमः ५५ श्रीशुक उवाच हे राजन् कृतापराधः सत्राजित् स्वकन्यां स्यमंतकेन मणिना सह कृष्णाय ददौ राजोवाच हे ब्रह्मन् सत्राजितः कृष्णस्य कं अपराधं अकरोत् तस्य स्यमंतकः कुतः प्राप्तः हरये कन्या कस्माद्धेतोः दत्ता तद्वद श्रीशुक उवाच सत्राजितस्य सखा सूर्यः आसीत् सः तस्मै स्यमंतकमणिं ददौ सः सत्राजित् कदाचित्तं मणिं कंठे धृत्वा द्वारकां प्रविष्टः तं विलोक्य जनाः सूर्योयमिति शंकिताः संतः कृष्णाय शशंसुः हे कृष्ण यदुषु गूढं त्वां ज्ञात्वा एषः सूर्यः त्वां द्रष्टुं आयाति श्रीशुक उवाच एवं बालवचः श्रुत्वा प्रहस्य कृष्णः आह नासौ रविः किंतु सत्राजित् मणिना ज्वलन् ततः सत्राजित् स्वगृहं प्रविश्य विप्रैः देवालये मणिं न्यवेशयत् सः मणिः दिने दिने अष्टौ स्वर्णभारान् सृजति किंच यत्र मणिः आस्ते तत्र दुर्भिक्षादयो न संति एकदा कृष्णः तं मणिं अयाचत सतु अर्थकामुकः न प्रादात् ततः एकदा सत्राजितस्य भ्राता प्रसेनः तं मणिं कंठे बध्वा अश्वं आरुह्य मृगयार्थं वनं ययौ तत्र सिंहः साश्वं तं हत्वा मणिं आच्छिद्य गिरिं अविशत् तत्र तं सिंहं जांबवान् निहत्य मणिं गृहीत्वा स्वबिले पुत्रस्य क्रीडनकं चक्रे तदा सत्राजित् भ्रातरं अदृष्ट्वा संतप्तः सन् उवाच मणिग्रीवः मम भ्राता प्रायः कृष्णेन हत इति तच्छ्रुत्वा जनाः कर्णे कर्णे अजपन् कृष्णोपि तच्छ्रुत्वा दुर्यशः मार्ष्टुं प्रसेनपदवीं गतः सन् वने अश्वं प्रसेनं सिंहेन हतं वीक्ष्य सिंहमपि गिरिपृष्ठे ऋक्षेण हतं वीक्ष्य प्रजाः बहिः स्थाप्य ऋक्षराजबिलं विवेश तत्र मणिं दृष्ट्वा तं हर्तुं बालसमीपं तस्थौ ततः अपूर्वनरं दृष्ट्वा धात्री चुक्रोश तच्छ्रुत्वा जांबवान् क्रुद्धः सन् कृष्णेन सह युयुधे तयोः २८ दिनानि अहर्निशं द्वंद्वयुद्धं अभूत् ततः कृष्णमुष्टिभिः श्लथितांगः जांबवान् अतिविस्मितः सन् कृष्णं आह हे भगवन् त्वां पुराणपुरुषं जाने किंच हे हरे त्वं विश्वसृजां स्रष्टा कालश्च असि- ६

ओ· ७ भारः मण ६ शेर ३७ तोळे १२ एवं अष्टानां भाराणां संख्या मण ५५ शेर २० सार्द्धपंचपंचाशत् मणाः

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

ततः कृष्णः तं पाणिना अभिमृश्य कृपया आह हे जांबवन् अहं मिथ्याभिशापं अनेन मणिना प्रमार्ष्टुं इह अंतर्बिलं प्राप्तः इत्युक्तः जांबवान् मणिना सह जांबवतीं कन्यां कृष्णाय ददौ ततः बिलद्वारस्थाः यादवाः कृष्णस्य निर्गमं द्वादशाहानि प्रतीक्ष्य दुःखिताः द्वारकां एत्य सर्वं ऊचुः तच्छ्रुत्वा रुक्मिणी देवक्यादयः ज्ञातयः अशोचन् ततः द्वारकौकसः सत्राजितं शपंतः संतः कृष्णप्राप्तये दुर्गां उपतस्थुः ततः सस्त्रीकः श्रीकृष्णः प्रादुर्बभूव ततः सर्वे जनाः तं प्राप्य जातोत्सवाः आसन् ततः कृष्णः सभायां सत्राजितं आहूय मणिप्राप्तिं आख्याय तस्मै मणिं ददौ सः लज्जितः सन् मणिं गृहीत्वा स्वगृहं गत्वा एवं अचिंतयत् तदाह अच्युतः कथं प्रसीदेत् किं कृत्वा मम भद्रं स्यात् मूढं लुब्धं मां जनः कथं न शपेत् एवं ध्यायन् कृष्णाय कन्यां दास्यामीति निश्चित्य मणिना सह स्वसुतां सत्यभामां ददौ ततो भगवान् तां यथाविधि उद्वाह्याह हे सत्राजित वयं मणिं न स्वीकुर्मः अयं मणिः तवास्तु वयं तु फलभागिनः ४५ इति दशमे षट्पंचाशत्तमः ५६ श्रीशुक उवाच हे राजन् विज्ञातार्थोपि कृष्णः पांडवान् दग्धान् श्रुत्वा सरामः कुरून् ययौ तत्र भीष्मादीन् संगम्य हा कष्टमित्यूचतुः हे राजन् एतदंतरं लब्ध्वा अक्रूर कृतवर्माणौ शतधन्वानं मणिः कुतो न गृह्यते त्वया इत्यूचतुः यः सत्राजित अस्मभ्यं कन्यां दातुं प्रतिश्रुत्य नः विगर्ह्य कृष्णाय अदात् सः कुतो न म्रियताम् एवं ताभ्यां भिन्नमतिः शतधन्वा शयानं सत्राजितं हत्वा मणिं आदाय जगाम तदा सत्यभामा हतं पितरं वीक्ष्य विलप्य तं तैलद्रोण्यां प्रास्य गजाह्वयं गत्वा कृष्णाय पितुर्वधं अकथयत् तदा तौ रामकृष्णौ विलप्य द्वारकां एत्य ततः कृष्णः शतधन्वानं हंतुं मणिं हर्तुं च आरेभे ततः सः शतधन्वा भीतः सन् साहाय्ये कृतवर्माणं अयाचत ततः सः अब्रवीत् अहं ईश्वरयोः तयोः अपराधं न कुर्यां येन अपराधेन कंसो मृतः जरासंधः सप्तदशवारं विरथो गतः एवं तेन प्रत्याख्यातः शतधन्वा अक्रूरं साहाय्ये अयाचत सोप्याह ईश्वरयोः बलं विद्वान् कः विरुध्येत यः भगवान् लीलया विश्वसृष्ट्यादि करोति यः सप्तवर्षः पाणिना शैलं दधार तस्मै भगवते नमः एवं अक्रूरे

श्लो० ७ तथाप्युक्त्वा त्वदीयं धनमस्माकमेवेति गूढोभिप्रायः, श्लो० ८ पांडवा बिलद्वारेण जतुगृहान्निर्गता इति, श्लो० ८ हास्तिनपुरं.

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri.

णप्रत्याख्यातः शतधन्वामणिं अक्रूरेन्यस्य शतयोजनगं अश्वं आरुह्य ययौ तदारामकृष्णौरथं आरुह्य तं अन्वीयाताम् ततः शतध
न्वामिथिलायाउपवने पतितं अश्वंत्यक्त्वापद्भ्यांअधावत् कृष्णोपितं अनुद्रुत्यचक्रेणशिरःछित्वावस्त्रयोःमणिंव्यचिनोत् ततःअप्रा
समणिः श्रीकृष्णः आगत्यरामंप्रतिआह मयाशतधन्वावृथाहतः तत्रमणिर्नास्ति ततोरामः आह हेकृष्णसमणिः शतधन्वनाकस्मिंश्चि
त्पुरुषेन्यस्तः तमन्वेषपुरं व्रज अहंजनकंद्रष्टुंइच्छामीत्युक्त्वारामः मिथिलांविवेश ततोजनकः रामंदृष्ट्वाउत्थाय पूजयामास एवंतेन
मानितः तत्रकतिचित्संवत्सरान् उवास ततोदुर्योधनः कालेगदांअशिक्षत् ततः केशवः द्वारकांएत्य शतधन्वनः मरणंमणेःअप्राप्तिं
चसत्यायै आह ततः सत्राजितस्यक्रियाः कारयामास ततः शतधनोर्वधंश्रुत्वा अक्रूर कृतवर्माणौद्वारकायाः पलायितौ ततःअक्रूरेगते
सतिद्वारकायां शारीरादयस्तापाः अभूवन् इत्थं एकेउपदिशंति यत्रकृष्णानिवासः तत्रअरिष्टदर्शनंघटेतकिम् किंच शाक्रकाश्यां
नावृष्टौ सत्यां आगतायश्वफल्काय काशिराजः स्वकृतांगांदिनीं प्रादात् ततोवृष्टिरभवत् तत्सुतः अक्रूरोपितत्प्रभावः यत्रतिष्ठति
तत्रउपतापादयोनभवंतीतिवृद्धवचः श्रुत्वाअक्रूरं आनाय्यकृष्णः तंसंपूज्यस्मयमानः उवाच हेअक्रूर शतधन्वनास्यमंतकमणिः
त्वयिन्यस्तः सः अस्माभिः पूर्वमेवविदितः किंच सत्राजितः अनपत्यत्वात् दायं सत्यायाः सुताः गृण्हीयुः तथापि समणिः त्वयि आस्ताम्
परंतु रामः मणिविषयेमांप्रतिनविश्वसिति अतोमणिंदर्शयित्वाबंधूनांशांतिंकुरु एवंभगवतासामभिः उक्तः अक्रूरः तस्मैमणिं
ददौ ततः कृष्णः तंमणिंज्ञातिभ्योदर्शयित्वाअक्रूरायददौ यःएतत् श्रीकृष्णस्यआख्यानंपठति शृणोतिवासः शांतिंप्राप्नोति ४२
इतिदशमेसप्तपंचाशत्तमः ५७ श्रीशुकउवाच हेराजन् एकदाकृष्णः सात्यक्यादिभिः सहपांडवान् द्रष्टुंइंद्रप्रस्थंगतः 
ततः पार्थाः तंकृष्णंदृष्ट्वाउत्थाय परिष्वज्य तन्मुखंदृष्ट्वामुदंप्रापुः ततः कृष्णः भीष्मयुधिष्ठिरौप्रतिनत्वाअर्जुनंआलिंग्य यमाभ्यां
श्लो·२ शतयोजनमात्रगामित्वात्ततः परंगंतुमशक्तस्तत्रपतितम्

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

वंदितः सन् आसने उपविवेश ततः द्रौपदी तं ननाम तथैव सात्यकिरपि तैः पूजितः सन् अन्यासने उपविष्टः ततः कृष्णः पृथां नत्वा कुशलं
पृष्टवान् तदा पृथा तान् क्लेशान् स्मरंती सती तं आह हे कृष्ण त्वया यदा अक्रूरः प्रेषितः तदैव नः कुशलं अभूत् युधिष्ठिर उवा० हे
कृष्ण अस्माभिः श्रेयः किमाचरितं यतः त्वं दृष्टः श्रीशुक उवाच हे राजन् ततः युधिष्ठिरेण प्रार्थितः भगवान् तत्रैव वार्षिकान्
मासान् अवसत् एकदा अर्जुनः कृष्णेन सह रथं आरुह्य धनुर्गृहीत्वा विहर्तुं वनं प्राविशत् तत्र मेध्यान् व्याघ्रसूकरमहिषहरिणा
दीन् शरैः अविध्यत् ततः भृत्याः तान् युधिष्ठिराय निन्युः अर्जुनस्तु तृषितः सन् यमुनां अगात् तत्र आचम्य जलं पीत्वा कृष्णपा-
र्थौ कन्यां ददर्शतुः ततः कृष्णेन प्रेषितः अर्जुनः तां प्राप्य पप्रच्छ हे कन्ये त्वं का अत्र कुतः प्राप्ता किं चिकीर्षसि अहं त्वां पतिमिच्छंतीं
मन्ये अतः सर्वं कथय कालिंद्युवाच हे पार्थ अहं सूर्यसुता विष्णुं पतिं इच्छंती सती तपः अकरवम् अन्यं पतिं न वृणे स मु
कुंदः मे तुष्यताम् अहं कालिंदी यावत् विष्णुदर्शनं स्यात् तावत् अत्र यमुनातीरे एव वसामि श्रीशुक उवा० ततः पार्थः कृष्णा
य तथैव अवदत् सः कृष्णः तां रथं आरोप्य धर्मराजं उपागमत् ततः पार्थैः विज्ञापितः कृष्णः विश्वकर्मणा तेषां नगरं कारयित्वा तत्र
वसन् सन् अग्नये खांडवं वनं दातुं अर्जुनस्य सारथिः आस ततः तुष्टोऽग्निः अर्जुनाय धनुः अश्वान् रथं अक्षयसायकौ तूणौ वर्म
च अदात् अग्नेः मोचितः मयः अर्जुनाय सभां अदात् यस्यां दुर्योधनस्य जलस्थलयोः दृष्टेर्भ्रमः आसीत् ततः युधिष्ठिरेण अनु-
ज्ञातः कृष्णः सात्यकिप्रमुखैः वृतः सन् द्वारकां एत्य सुमुहूर्ते कालिंदीं उपयेमे ततः आवंत्यौ विंदानुविंदौ स्वयंवरे कृष्णे सक्तां स्वभगिनीं
न्यषेधताम् ततः कृष्णः तां मित्रविंदां राज्ञां पश्यतां सतां प्रसह्य हृतवान् अथ कौसल्यः नग्नजिन्नाम राजा आसीत् तस्य सत्या नाम क
न्या आसीत् तां राजानः सप्त गोवृषान् अजित्वा वोढुं न शेकुः एवंभूतां तां श्रुत्वा कृष्णः सेनया सह कौसल्यपुरं जगाम ततः तं विलोक्य प्रीतः

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

कौसल्यः अपूजयत् ततः सत्या रमापतिं विलोक्य तं वरं चकमे अयं मे पतिर्भूयात् इति किंच यत्पादरजः शिवादयः शिरसा बिभ्रति
सः श्रीशः मम केन तुष्येत् श्रीशुकउवा॰ ततः कृष्णः राजानं आह हे नरेंद्र क्षत्रियस्य याञ्चा निंदिता तथापि तव सौहृदेच्छया त्व
दीयां कन्यां याचे न वयं शुल्कदाः राजोवाच हे नाथ त्वत्तोधिकः वरः कोन्योस्ति परंतु पुंसां वीर्यपरीक्षणार्थं पणः कृतः अतः एते
सप्त वृषाः त्वया निगृहीता यदि स्युः तर्हि मे कन्यायाः वरः भवान् अभिमतः श्रीशुकउवा॰ एवं समयं श्रुत्वा आत्मानं सप्तधा कृ-
त्वा लीलयैव वृषान् दामभिः बध्वा व्यकर्षयत् ततः प्रीतः कौसल्यः तां कृष्णाय ददौ ततः कृष्णः तां प्रत्यगृण्हात् तदा राजपत्न्यः स्वदुहि
तुः कृष्णं पतिं लब्ध्वा मुमुदिरे तदा शंखभेर्यादयो नेदुः ततः राजा दुहित्रे दशसहस्रं गाः स्त्रीणां त्रिसाहस्रं नवसहस्राणि नागान् नागा
च्छतगुणान् रथान् तच्छतगुणान् अश्वान् तच्छतगुणान् नरान् ददौ ततः दंपती रथं आरोप्य प्रस्थापयामास तच्छ्रुत्वा भग्नवीर्याः भू
पाः कन्यां नयंतं कृष्णं पथि रुरुधुः ततः शरान् प्रक्षिपतस्तान् अर्जुनः कालयामास ततः कृष्णः द्वारकां एत्य तया सह रेमे ततः श्रुतकी
र्तेः सुतां भद्रां उपयेमे ततः भद्राधिपतेः सुतां लक्ष्मणां एक एव स्वयंवरे जहार एवं भौमं हत्वा तदगृहात् आनीताः सहस्रशः कन्याः ताः
कृष्णस्य अन्याः स्त्रियः आसन् ५९ इति दशमे ऽष्टपंचाशत्तमः ५८ राजोवाच हे ब्रह्मन् भगवता यथा भौमो हतः येन का
रणेन तदाचक्ष्व श्रीशुकउवाच एकदा इंद्रेण विज्ञापितः भगवान् सभार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ तत्र गत्वा गद
या अद्रीन् निर्बिभेद शरैः शस्त्रदुर्गाणि चक्रेण अग्निं जलं वायुं च नि॰ असिना मुरपाशान् ॰ शंखनादेन यंत्राणि॰ गदया प्राकारं च
बिभेद ततः शंखध्वनिं श्रुत्वा शयानः पंचमुखः मुरः जलात् उत्थाय शूलं उद्यम्य कृष्णं अभिद्रुत्य गरुडाय शूलं प्रक्षिप्य पंचवक्त्रैः
व्यनदत् सः शब्दः ब्रह्मांडं आवृणोत् तदा हरिः तच्छूलं शराभ्यां त्रिधा भंक्त्वा तं मुखेषु शरैः अताडयत् सोपि मुरः तस्मै रुषा गदां-

ओ॰ ३ इत्यादिप्रदाः, ओ॰ ६ नरकासुरं, ओ॰ ५ भैष्मी जांबवती भामा सत्या भद्रा च लक्ष्मणा कालिंदी मित्रविंदा च त्वष्टौ पट्टमहास्त्रियः १



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

व्यमुंचत् तां गदां कृष्णः स्वगदया सह स्वधा निर्भिद्य चक्रेण तस्य शिरांसि चिच्छेद ततः तस्य सप्तपुत्राः नाम्नः १ अंतरिक्षः २ सुबलः ३
विभावसुः ४ वसुः ५ नभस्वान् ६ अरुणः ७ एते भौम प्रयुक्ताः संतः चमूपतिं पीठं पुरस्कृत्य कृष्णं आसाद्य शर खड्ग शक्ति शूलानि कृ
ष्णे प्रयुंजन ततः कृष्णः तच्छस्त्रकूटं स्वशरैः तिलशः छित्वा तान् सर्वान् यमालयं अनयत् तन्निरीक्ष्य नरकः गजैः निर्गत्य गरुडो-
परिस्थितं सभार्यं कृष्णं दृष्ट्वा शतघ्नीं मुमोच तदा योधा अपि विव्यधुः तदा कृष्णः बाणैः भौम सैन्यं छिन्नावयवं चकार शूरैः प्रयुक्ता
नि शस्त्राणि शरैः आच्छिनत् गरुडेन ताडिताः गजाः पुरं विविशुः तदा नरकः अयुध्यत ततो नरकः स्वसैन्यं गरुडेनार्दितं दृष्ट्वा तं ग-
रुडं शक्त्या प्राहरत् तया विद्धोपि गरुडः नाकंपत ततो भौमः कृष्णं हंतुं शूलं आददे तद्विसर्गात् पूर्वमेव हरिः चक्रेण तच्छिरः चिच्छेद त
तः हाहेति साध्विति शब्दो भूत् ऋषयो देवाश्च माल्यैः कृष्णं विकिरंतः संतः ईडिरे ततः भूमिः कृष्णं उपेत्य कुंडले वारुणं छत्रं वनमा
लां महामणिं च दत्वा अस्तौत् भूमिरुवाच नमस्ते देवदेवेश शंखचक्रगदाधर भक्तेच्छोपात्त रूपाय परमात्मन्नमोस्तुते
२५ नमः पंकजनाभाय नमः पंकजमालिने नमः पंकजनेत्राय नमस्ते पंकजांघ्रये २६ नमो भगवते तुभ्यं वासुदेवाय विष्णवे परमा-
त्मन्नमोऽस्तुते हे ईश त्वं जगतः सृष्ट्यादौ सत्वादीन् गुणान् धत्से हे भगवन् अयं नरकः मे त्वयैव दत्तः निहतश्च तस्यायं पुत्रः भीतः
सन् तव पाद पंकजं प्रापितः अतः अभयं दत्वा पाहि श्रीशुक उवाच एवं भूम्या प्रार्थितः भगवान् तस्य अभयं दत्वा भौमगृहं प्र
विश्य भौमाहृतानां कन्यानां शतैकाधिक षोडश सहस्रं ददर्श ततस्ताः कृष्णं दृष्ट्वा मनसा तं पतिं वृत्वा पृथक् पृथक् ऊचुः अयं मम प
तिर्भूयात् धाता अनुमोदताम् इति तत्र कृष्णः ताः कन्याः नरयानैः द्वारकां प्राहिणोत् तथा कोशान् रथान् अश्वान् चतुर्दंतान् गजान्
६४ प्राहिणोत् ततः कृष्णः इंद्रभवनं गत्वा अदित्यै कुंडले दत्वा इंद्रेण पूजितः भार्यया चोदितः सन् पारिजातं उत्पाट्य गरुडे आ-

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

रोप्य सेंद्रान्देवान् जित्वा द्वारकां एत्य तं पारिजातं सत्यभामाया उद्याने स्थापितवान् किंच अहो यः इंद्रः पूर्वं इंद्रसाधनाय अच्युतं-
प्रार्थितवान् स एव सिद्धार्थः सन् तेन साकं विग्रहं करोति अतस्तस्य धिक् अथ हरिः एकस्मिन्मुहूर्ते नानागृहेषु तावद्रूपधरः सन्
ताः कन्याः उपयेमे ततः तासां गृहेषु स्थितः सन् रेमे इत्थं रमापतिं पतिं प्राप्य ताः दासीशता अपि विभोर्दास्यं स्वयं विदधुः ४७ इ
ति दशमे एकोनषष्टितमः ५९ श्रीबादरायणिरुवा॰ हे राजन् कदाचित् स्वतल्पस्थं कृष्णं पतिं भैष्मी व्यजनेन पर्यचरत् त
दा कृष्णः श्रीरूपिणीं हास्यमुखीं तां दृष्ट्वा प्रीतः सन् आबभाषे श्रीभगवानुवाच हे राजपुत्रि त्वं श्रीमद्भिः भूपैः ईप्सिता सती
भ्रातृपितृभ्यां दत्ता च सती तान् शिशुपालादीन् हित्वा असदृशान् नः कस्माद्वृतवती कीदृशान् नः जरासंधादिभ्यः भीतान् समु
द्रं शरणं गतान् त्यक्तनृपासनान् किंच वयं निष्किंचनाः निष्किंचनजनप्रियाः तस्मात् आढ्याः मां न भजंति किंच ययोः वित्तजन्मैश्व
र्यादि समं अस्ति तयोः विवाहो मैत्री च अन्योन्यं भवति नोत्तमाधमयोः हे वैदर्भि एतत् अविज्ञाय गुणैर्हीनाः वयं वृताः अथ आत्म
नः अनुरूपं क्षत्रियर्षभं भजस्व येन त्वं मनोरथान् लप्स्यसे किंच हे सुभ्रु चैद्यादीनां मदांधानां गर्वनाशाय मया त्वं आनीता परं
तु वयं स्त्रीपुत्रकामुकान श्रीशुकउवाच भगवान् आत्मानं वल्लभं मन्यमानां तां एतावदुक्त्वा उपारमत् सा भैष्मी प्रिय
स्य अश्रुतपूर्वं अप्रियं वचः श्रुत्वा भीता सती चिंतां प्राप तदा पदा भुवं लिखंती सती अधोमुखी तूष्णीं तस्थौ तस्याः हस्तात् व्यजनं त
दनु देहश्च पपात ततः कृष्णः प्रियायाः प्रेमबंधनं दृष्ट्वा करुणः सन् अनुकंप्य तल्पात् अवरुह्य तां उत्थाप्य केशान् समूह्य तद्वक्त्रं पाणि-
ना प्रमृज्य तां बाहुना आश्लिष्य सांत्वयामास श्रीभगवानुवा॰ हे वैदर्भि मां मा असूयेथाः त्वद्वचः श्रोतुकामेन मया नर्मणा एवं उक्तम् हे भी
रु नर्मभिः कालो नीयते इति यत् अयं हि गृहिणां परमो लाभः श्रीशुकउवाच एवं भगवता सांत्विता वैदर्भी तं नर्मोक्तिं-



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

ज्ञात्वा प्रियत्यागभयं जहौ ततः तस्य मुखं वीक्षती सती बभाषे रुक्मिण्युवाच हे अरविंदाक्ष त्र्यधीशः त्वं क गुणमयी प्रकृतिः अहं क किंच हे हरे त्वं शब्दादिविषयेभ्यो भीत इव हृदये प्रकाशसे किंच नृपासनं नरकतुल्यमिति ज्ञात्वा त्वत्सेवकैरपि त्यक्तं किं पुनर्वक्तव्यं त्वया त्यक्तमिति किंच ब्रह्मादयः तस्मै तुभ्यं बलिं हरंति तस्य ते दरिद्रता न घटते किंच ब्रह्मादीनां त्वं प्रेष्ठः ते च तव प्रेष्ठाः किंच ये स्वाढ्यतया अंधाः ते अंतकं त्वां न जानंति किंच त्वं जगदात्मा आत्मदश्च इति ज्ञात्वैव ब्रह्मादीनपि हित्वा मया वृतोसि अपि च यः त्वं धनुःशब्देन जरासंधादीन् विद्राव्य मां हृतवानसि अतः समुद्रं प्रपन्नं इति यत्तव वचः तदेव मंदं किंच तव भजनेच्छया गयादयः राज्यं त्यक्त्वा वनं गत्वा तव पदवीं आश्रिताः ते किं सीदंति नेत्यर्थः अतः मां भजंतः सीदंतीत्युक्तमपि मंदं किंच गुणालयस्य तव पादकमलगंधं आघ्राय का स्त्री अन्यं आश्रयेत अतः जगतां अधीशं त्वां अहं अभजं किंच हे अच्युत त्वयोक्ता राजानस्तु यस्याः कर्णपथं त्वत्कथा न प्राप्ता तस्याः दुर्भगायाः पतयो भवंतु हे हरे त्वत्पादाब्जमकरंदं अजिघ्रती या स्त्री सा मूढा सती जीवत् शवं भजति अतः हे अंबुजाक्ष यद्यपि त्वं निरपेक्षः तथापि तव चरणयोः मम प्रीतिरस्तु हे भगवन् ते वचः मिथ्या न मन्ये यतः लोके कन्यायाः एव कचिद्रतिर्भवति अतः मम रतिस्तु त्वय्येव किंच विवाहितायाः अपि जारिण्याः मनः नवं नवं पुरुषं एति तथापि बुधः तां न बिभृयात् श्रीकृष्णउवाच हे साध्वि त्वद्वचः शुश्रूषुणा मया यदुक्तम् तत्तु त्वं अन्वाख्यातवती तत्सत्यमेव किंच त्वया पातिव्रत्यं उपलब्धम् किंच ये मोक्षदं मां सुखाद्यर्थं भजंति ते मंदभाग्याः स्युः तस्मात् हे स्त्रि त्वया मयि निष्कामा अनुवृत्तिः कृता एतत् दिष्ट्या किंच त्वादृशीं गृहिणीं न पश्यामि यतः विवाहकाले आसान् नृपान् अविगणय्य संदेशहरो द्विजः प्रेषितः तथा विवाहे स्वभ्रातुर्विरूपकरणं ततः अनिरुद्धविवाहे तद्वधं च स्मरत्यपि अस्मद्वियोगभीत्या तद्दुःखं सोढवती तेन वयं जिताः स्म श्रीशुकउवा० एवं जगदीश्वरः नर्मगोष्ठीभिः

ओ० ६ यथा काशिराजकन्या नाम्नांबा ॰ बालिकांबिकानंतिस्वणां मध्ये अंबायाः कन्यायाः एव शाल्वे सनिर्जितान हृत्

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

रमयासहरेमे तथा अन्यासामपिगृहेषुगृहवान्इवरेमे ५९ इतिदशमेषष्टितमः ६० श्रीशुकउवा॰ हेराजन् कृष्णस्यताः
स्त्रियःप्रत्येकंपितृसमान् दशदशपुत्रान् अजीजनत् ताःगृहात् अनपगतंकृष्णंवीक्ष्यस्वंस्वंप्रेष्ठंमत्वापियस्यमनःस्वहावभा
वादिभिःक्षोभयितुंसमर्थानबभूवुः किंतुदासीशताअपिविभोः स्वयंदास्यंचक्रुः तासांमध्येयाःपूर्वंमुक्ताअष्टौमहिष्यः तत्पु-
त्रान्गृह्णामि तत्रप्रद्युम्नः १ चारुदेष्णः २ सुदेष्णः ३ चारुदेहः ४ सुचारुः ५ चारुगुप्तः ६ भद्रचारुः ७ चारुचंद्रः ८ विचारुः ९ चारुः १०
एतेरुक्मिण्यांजाताः भानुः १ सुभानुः २ स्वर्भानुः ३ प्रभानुः ४ भानुमान् ५ चंद्रभानुः ६ बृहद्भानुः ७ अतिभानुः ८ श्रीभानुः ९ प्रति
भानुः १० एतेसत्यभामात्मजाः सांबः १ सुमित्रः २ पुरुजित् ३ शतजित् ४ सहस्रजित् ५ विजयः ६ चित्रकेतुः ७ वसुमान् ८ द्रविडः ९
क्रतुः १० एतेजांबवत्याः वीरः १ चंद्रः २ अश्वसेनः ३ चित्रगुः ४ वेगवान् ५ वृषः ६ आमः ७ शंकुः ८ श्रीमान्वसुः ९ तथाकुंतिः १० नाग्नजितेः
सुताः श्रुतः १ कविः २ वृषः ३ वीरः ४ सुबाहुः ५ भद्रः ६ शांतिः ७ दर्शः ८ पूर्णमासः ९ सोमकः १० कालिंद्याएते प्रघोषः १ गात्रवान् २
सिंहः ३ बलः ४ प्रबलः ५ ऊर्ध्वगः ६ महाशक्तिः ७ सहः ८ ओजः ९ अपराजितः १० लक्ष्मणायाएते वृकः १ हर्षः २ अनिलः ३ गृध्रः ४ व
र्धनः ५ अन्नादः ६ महाशः ७ पावनः ८ वह्निः ९ क्षुधिः १० एतेमित्रविंदात्मजाः संग्रामजित् १ बृहत्सेनः २ शूरः ३ प्रहरणः ४ अपरि
जित् ५ जयः ६ सुभद्रः ७ वामः ८ आयुः ९ सत्यकः १० भद्रायाएते दीप्तिमान् १ ताम्रतप्ताद्यारोहिण्यास्तनयादश प्रद्युम्नात्रुक्म
वत्यांअनिरुद्धोऽभूत् एषांपुत्रपौत्राः कोटिशोबभूवुः राजोवाच रुक्मीअरिपुत्रायप्रद्युम्नायकन्यांकथंप्रादात् यःकृष्णे
नपरिभूतः तंहंतुंरंध्रंप्रतीक्षतेतद्वद श्रीशुकउवा॰ ततःस्वयंवरेरुक्मवत्यावृतः अनिरुद्धः युधिराज्ञःनिर्जित्यतांजहार १०
रुक्मीपूर्ववैरंस्मरन्नपिस्वसुःप्रियंकुर्वन्सन् भागिनेयायसुतांप्रादात् रुक्मिण्याः तनयांचारुमतींकृतवर्मसुतोबलीउपये-

ओ॰४ शैब्याः, ओ॰४ रोहिण्याः कृतानामुक्तिरन्यासामुपलक्षणार्थम्

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

मे किंच रुक्मीबद्धवैरोपिस्व पौत्रीं रोचनानाम्नीं दौहित्राय अनिरुद्धाय ददौ हेराजन् तस्मिन्विवाहे रामकृष्णाद्याः यादवाः भोजकटं पुरं जग्मुः विवाहे निवृत्ते सति द्दसाः नृपाः रुक्मिणं ऊचुः हेराजन् अयंरामः अनक्षज्ञोस्ति अतः एतं अक्षैः विनिर्जयइत्युक्तः रुक्मी बलं आहूयतेन सहक्रीडितवान् तत्ररामः शतं सहस्त्रं अयुतं पणं आददे तंपणं रुक्मी अजयत् तदाकालिंगः दंतान् संदर्शयन् बलं प्राहसत् तत् बलः नामृष्यत् ततः रुक्मीलक्षंपणं अगृह्णात् तत्रबलः अजयत् रुक्मीतु अहंजितवान् इतिमिथ्याह तदाक्रुद्धः रामः अर्बुदंपणं आददे तंचापिरामः धर्मेणजितवान् रुक्मीतु कपटं आश्रित्यमयाजितमित्याह हेसभासदः यूयंब्रूततदाब्रवीन्नभोवाणी बलेनैवजितो ग्लहः धर्मतोवचनेनैव रुक्मीवदतिवैमृषा ३२ ततः रुक्मीतां अनादृत्य संकर्षणं परिहसन् बभाषे अहोअक्षैः बाणैश्च राजानः क्रीडंति नगोपालाः रुक्मिणा एवं अधिक्षिप्तः रामः परिघं उद्यम्यतं रुक्मिणं हत्वा कलिंगराजं दशमे पदे गृहीत्वातस्य दंतान् अपातयत् ततः अन्येराजानः बलेन परिघार्दिताः संतः दुद्रुवुः रुक्मिणि श्यालेनिहिते सति हरिः रुक्मिणी बलयोः स्नेहभंगभयात् साधु असाधुवान अब्रवीत् ततः नवोढ्या सह अनिरुद्धं रथे आरोप्य रामकृष्णादयः भोजकटात् द्वारकां ययुः ३९ इतिदशमे एकषष्टितमः ६१ राजोवाच हेब्रह्मन् अनिरुद्धः बाणस्यतनयां उषां उपयेमे तत्रहरिशंकरयोः महद्युद्धं अभूत् तत्सर्वं कथितुं अर्हसि श्रीशुकउवाच महात्मनः बलेः पुत्रशतज्येष्ठः बाणः पुत्रः आसीत् सः शिवभक्तिरतः सन् शोणितपुरे राज्यं अकरोत् तस्य शंभोः प्रसादेन देवाः किंकराइव आसन् सः सहस्त्रबाहुः सन् तांडवे शिवं अतोषयत् ततः भक्तवत्सलः शिवः तं वरेण च्छंदयामास सः बाणः तं शिवं पुररक्षणार्थं वव्रे सः एकदा वीर्यदुर्मदः सन् किरीटेन तत्पदांबुजं स्पृशन् आह हेदेवदेवेश मह्यं दोः सहस्त्रं त्वयादत्तं परंतु मे भारायअभवत् यतः त्रिलोक्यां त्वदृते समं योद्धारं नलेभे किंच हेआद्य अहं कंडूत्यापूर्णैः भुजैः अद्रीन् चूर्णयन् दिग्गजान् अग-

ओ॰४ दशकोटिशः ओ॰२ भुजः

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

च्छम् तेपि भीताः संतः दुद्रुवुः एवं तद्वचः श्रुत्वा क्रुद्धः शिवः आह यदा तव केतुः भज्यते तदा तव मत्समेन त्वद्दर्पघ्नं युद्धं भवेत् इत्युक्तः
बाणः हृष्टः सन् गिरिशादेशं प्रतीक्षन् स्वगृहं प्राविशत् तस्य उषा नाम कन्या आसीत् सा स्वप्ने अनिरुद्धेन सह रतिं प्राप ततः सा स्व
प्ने एव कान्तं तं अपश्यंती हे कांत त्वं क्वासि क्वासि इति वादिनी सती उत्तस्थौ ततः बाणस्य मंत्री कुंभांडः तत्सुता चित्रलेखा उषां अपृ-
च्छत् हे सुभ्रूः त्वं कं मृगयसे ते मनोरथः कः हे राजपुत्रि अद्यापि तव भर्त्तारं न पश्यामि उषोवाच हे सखि मया स्वप्ने क
श्चित् नरश्रेष्ठः दृष्टः सः मां अधरं मधु पाययित्वा दुःखाब्धौ क्षिप्त्वा क्वापि यातः तं अहं मृगये चित्रलेखोवाच हे सखि तव दुः
खं हरामि यः तव मनोहर्त्ता सः त्रैलोक्ये यदि स्यात् तर्हि तं आनेष्ये तं नरं आदिश इत्युक्त्वा देवगंधर्वसिद्धचारणपन्नगदैत्यविद्याधरय
क्षमनुजान् अलिखत् मनुजानां मध्ये वृष्णीन् रामकृष्णौ प्रद्युम्नं अनिरुद्धं च अलिखत् तत्र अनिरुद्धं वीक्ष्य ह्रिया अवाङ्मुखी स
ती सः असौ इति प्राह ततः सा चित्रलेखा तं कृष्णस्य पौत्रं ज्ञात्वा विहायसा द्वारकां एत्य तत्र पर्यंके सुप्तं अनिरुद्धं अगृहीत्वा शोणि-
तपुरं आनीय सख्यै प्रियं अदर्शयत् सा उषा तं विलोक्य मुदिताननासती स्वगृहे प्राद्युम्निना सह रेमे ततः वासःस्रग्गंधादिभिः सेवया
च उषया अर्चितः सन् अहर्गणान् न बुबुधे ततो भटाः तां यदुवीरेण भुज्यमानां हेतुभिः ज्ञात्वा राजानं अकथयन् हे राजन् तव कन्यायाः
कुलदूषणं विचेष्टितं लक्षयामः तत्कुतः इति न जानीमः ततः तच्छ्रुत्वा बाणः व्यथितः सन् कन्यागृहं एत्य तत्र कामात्मजं भुवनैकसुंद-
रं तया सह अक्षैः क्रीडंतं तं वीक्ष्य विस्मितः अभवत् ततः अनिरुद्धः ससैन्यं तं दृष्ट्वा परिघं उद्यम्य जिघृक्षया प्रसर्पतः तान् अहनत्
तेहन्यमानाः भवनात् विनिर्गताः संतः प्रदुद्रुवुः ततः बाणः कुपितः सन् तं नागपाशैः बबंध ततः तं बद्धं दृष्ट्वा उषा अरोदीत् ३५ 
इति दशमे द्विषष्टितमः ६२ श्रीशुकउवाच हे राजन् अनिरुद्धं अपश्यतां अनुशोचतां कृष्णादीनां सतां चत्वारो वा

ओ॰४ विरुद्धाचरणम्॰

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

षिका मासाः व्यतीयुः ततः एकदा नारदात् बद्धस्य अनिरुद्धस्य वार्तां तत्कृतं युद्धादिकं च श्रुत्वा वृष्णयः शोणितपुरं ययुः ततः ते-
प्रद्युम्न सात्यकि सांबादयः द्वादशाक्षौहिणी सैन्यैः समंतात् बाण नगरं रुरुधुः ततो बाणः भज्यमान पुरोद्यानादिकं प्रेक्षमाणः स
न् ससैन्यः ययौ तदा बाणार्थे श्री शिवः प्रमथैः वृतः सन् वृषं आरुह्य युधि आगत्य रामकृष्णाभ्यां सह युयुधे तदा अद्भुतं युद्धं आ-
सीत् तत्र कृष्ण शंकरयोः प्रद्युम्न गुहयोः कुंभांड कूपकर्णाभ्यां बलस्य सांबस्य बाणपुत्रेण सात्यकेः बाणेन सह युद्धं आसीत्
तदा ब्रह्मादयो देवाः विमानैः युद्धं द्रष्टुं अगमन् ततः श्रीकृष्णः शंकरानुचरान् भूत प्रमथ गुह्यक डाकिनी कूष्मांडादीन् शरैः द्रावया-
मास तदा शिवः कृष्णाय पृथग्विधानि अस्त्राणि प्रायुंक्त तानि भगवान् प्रत्यस्त्रैः शमयामास ब्रह्मास्त्रस्य ब्रह्मास्त्रम् वायव्य
स्य पार्वतम् आग्नेयस्य पार्जन्यं पाशुपतस्य नारायणास्त्रं ततः कृष्णः जृंभमाणास्त्रेण शिवं मोहयित्वा बाणस्य सेनां जघान ततः
स्कंदः प्रद्युम्न बाणैः पीडितः सन् असृक् विमुंचन् रणात् अपाक्रमत् कुंभांड कूपकर्णौ मुशलार्दितौ संतौ पेतुः तदा बाण सैन्यानि
दुद्रुवुः ततो बाणः स्वसैन्यं विशीर्यमाणं दृष्ट्वा संरब्धः सात्यकिं हित्वा कृष्णं अभ्यद्रवत् ततः सः पंचशतानि धनूंषि आकृष्य युगप-
त् एकैकस्मिन् द्वौ द्वौ शरौ संदधे हरिः तानि धनूंषि युगपच्छित्वा सारथिं रथं अश्वांश्च हत्वा शंखं अपूरयत् तदा बाणस्य माता
कोटरा नाम्नी नग्ना सती पुत्र प्राण रिरक्षया कृष्णस्य पुरः अवतस्थे कृष्णः तां अनिरीक्ष्यमाणः सन् तिर्यङ्मुखो बभूव तावत् बा
णः पुरं आविशत् एवं भगवता भूतगणे विद्राविते सति शैवः ज्वरः कृष्णं अभ्यपद्यत अथ कृष्णः तं ज्वरं दृष्ट्वा शीतज्वरं असृज
त् ततः तौ ज्वरौ युयुधाते तदा वैष्णवेन पीडितः शैवज्वरः भीतः सन् कृष्णं तुष्टाव ज्वर उवाच हे भगवन् अनंतशक्तिं त्वां नमामि किंच
कालादिकं सर्वं एषा त्वन्मायैव अतः तन्नाशकं त्वां भजे एतत् तव जन्म भूमेः भारहरणायास्ति किंच हे विभो तव शीतज्वरेण अहं तप्तोऽस्मि
औ॰ प्र॰ पुस्त॰

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

यावत्तेंघ्रिमूलंनोसेवेरन् तावद्देहिनांनापोयुक्तः सेवायांप्रवृत्तानांत्वनुचितइति श्रीभगवानुवा॰ हेत्रिशिरःतेप्रसन्नोस्मि
तेमज्वरान् भयंव्येतु यःनौइमंसंवादंस्मरति तस्यत्वया भयंनोत्पादनीयम् इत्युक्तःशैवज्वरः अच्युतंनत्वागतः बाणस्तुरथं-
आरूढः सन् योत्स्यन् कृष्णंअगात् ततः अच्युते बाहुसहस्रेणबाणान् मुमुचे ततःकृष्णःचक्रेणतस्य बाहून् चिच्छेद तदाभक्ता-
नुकंपीशिवःकृष्णसमीपंएत्यतंअभाषत रुद्रउवाच त्वंपरंब्रह्मासि यस्यनभआदयोनाभ्याद्यवयवाःसभवान् लोककल्पः
पुरुषः असिविराड्रूपस्यतवायंअवतारः धर्मस्यगुप्त्यैजगतःअभ्युदयायवर्तते यन्मायामोहिताःपुत्रादिषुप्रसक्ताः दुःखसागरे
उन्मज्जंति निमज्जंति किंच इमंनृदेहंलब्ध्वायःत्वत्पादौनाद्रियेतसः शोच्यः किंच यः ईश्वरंविसृजते सः अमृतंत्यक्त्वाविषंअत्तिअ
तः अस्यविश्वस्थित्यादिहेतुंत्वां भवापवर्गायभजाम इति किंच अयंबाणः ममप्रियः अस्यमया अभयंदत्तं अतःअस्मिन् प्रसादः
संपाद्यताम् श्रीभगवानुवा॰ हेभगवन् त्वंयत् आत्थतत् तवप्रियंकरवाम किंच भवतायन्निश्चितंतत् मयाअनुमोदित
म् अयंबाणःममापिअवध्योस्ति यतःप्रह्लादायवरोदत्तोनवध्योमेतवान्वयइति तथापिअस्यगर्वनाशार्थंबाहवः छिन्नाःभुवः
सारभूतंबलंचनाशितम् अस्यअवशिष्टाः चत्वारोभुजाः अजरामराः भविष्यंति अयंबाणःतवपार्षदमुख्योभविष्यति इतिअभ
यंलब्ध्वाशिरसाकृष्णंप्रणम्यउषयासहप्राद्युम्निंरथंआरोप्यसमुपानयत् ततःकृष्णःसपत्नीकंप्राद्युम्निंपुरस्कृत्यध्वजादिभि
रलंकृतांस्वराजधानींविवेश यःप्रातःउत्थायएवंकृष्णविजयंस्मरेत् तस्यपराजयोनस्यात् ५३ इतिदशमेत्रिषष्टितमः ६३
श्रीशुकउवाच हेराजन् एकदासांबप्रद्युम्नादयः यदुकुमाराः विहर्तुंउपवनंजग्मुः तत्रसुचिरंक्रीडित्वातृषिताःजलंविचिन्वंतःसं १२
तः निरुदकेकूपेगिरिनिभंकृकलासंवीक्ष्यविस्मिताःसंतःकृपयातस्यउद्धरणेयत्नंचक्रुःयदापतितंतंपाशैःबद्ध्वासमुद्धर्तुंनाशक्नुवन्

ओ·१ सरठम्·

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

तदा कृष्णाय आचख्युः ततः कृष्णः तत्रागत्य तं वीक्ष्य लीलया वामकरेण उज्जहार ततः श्रीकृष्णकरस्पृष्टः सः तद्रूपं सद्यः विहाय तप्तस्वर्णवर्णः देवो बभूव ततः भगवान् विद्वानपि जनेषु तन्निदानं विख्यापयितुं पप्रच्छ हे महाभाग त्वं कोसि अहं त्वां देवोत्तमं गणयामि त्वं केन कर्मणा इमां दशां प्रापितः हे सुभद्र अत्र नः वक्तुं योग्यं यदि मन्यसे तर्हि आख्याहि श्रीशुक उवाच इति कृष्णेन पृष्टः राजा माधवं प्रणिपत्याह नृग उवाच हे प्रभो अहं इक्ष्वाकुपुत्रः नृगो नाम राजास्मि दानिष्वाख्यायमानेषु यदि ते कर्णं स्पृशम् किं च हे नाथ तव अविदितं किं नु तथापि त्वदाज्ञया वक्ष्ये हे भगवन् यावंत्यः भूमेः सिकताः तथा दिवि तारकाः तथा वर्षधाराः तावंत्यः पयस्विनीः कपिलवर्णाः सवत्साः सालंकृताः गाः स्वलंकृतेभ्यः द्विजपुंगवेभ्यः अहं प्रादाम् तथा गोभूहिरण्यगृहाश्वहस्तिकन्यादासीतिलरूप्यशय्यावस्त्ररत्नरथांश्च प्रादाम् तथा यज्ञैः इष्टं पूर्तं च चरितम् एवं भूतस्य मम किंचित्संकटं प्रासंतत् शृणु कस्यचित् द्विजमुख्यस्य भ्रष्टा गौः मम गोधने मिलिता सा च अविदुषा मया अन्यस्मै विप्राय दत्ता ततः तेन नीयमानां तां दृष्ट्वा तत्स्वामी ममेति तं आह प्रतिग्राही नृगो मे दत्तवान् इति आह एवं विवदमानौ तौ विप्रौ मां ऊचतुः भवान् दाता ऽपहर्त्तेति तच्छ्रुत्वा मे भ्रमः अभवत् ततः मया उभौ विप्रौ प्रार्थितौ स्वामिनं प्रयुक्तं गवां लक्षं प्रदास्यामि एषा मे नीयताम् प्रतिग्राहिणमपि एवमुक्तं भो द्विजौ नरके पतंतं मां समुद्धरतम् ततः स्वामी अहं न प्रतीच्छे इत्युक्त्वा गतः प्रतिग्राह्यपि तथैवोक्त्वा गतः तदा याम्यैः यमलोकं अहं नीतः सन् तत्र यमेन पृष्टः पूर्वं त्वं अशुभं भुंक्षे उत शुभमिति तदा पूर्वं अशुभं भुंजे इति मयोक्ते स नि सः पत इति प्राह तावत् अहं पतन् सन् आत्मानं कृकलासं अद्राक्षं हे केशव तव दासस्य मे स्मृतिः अद्यापि न विभ्रष्टा हे कृष्ण देवगतिं यांतं मां आज्ञां देहि इत्युक्त्वा तं परिक्रम्य स्वमौलिना पादौ स्पृष्ट्वा कृष्णेन अनुज्ञातः विमानं आरुहत् ततः कृष्णः राज्ञः शिक्षयन् परिजनं प्राह भो जनाः ब्रह्मस्वं ईषदपि अग्नेरपि दुर्जरं बत किमुत राज्ञाम् नाहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया ब्रह्मस्वं हि विषं प्रो-

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

कंनास्यप्रतिनिधिर्भुवि ३३ हिनस्तिविषमत्तारं वह्निरद्भिःप्रशाम्यति कुलंसमूलंदहति ब्रह्मस्वारणिपावकः ३४ ब्रह्मस्वंभुक्तंचे
त्त्रिपुरुषंहंति प्रसह्यभुक्तंचे दशपूर्वान् दशा परान् पुरुषान्हंति किंच हृतवृत्तीनांविप्राणां क्रंदतांसतां अश्रुबिंदवः यावतः पांसून्
गृण्हंतितावतोऽब्दान् ब्रह्मस्वहारिणः कुंभीपाकेषु पच्यंते स्वदत्तांपरदत्तांवा ब्रह्मवृत्तिंहरेच्चयः षष्टिवर्षसहस्राणिविष्ठायांजायते
कृमिः अतः मेब्रह्मस्वंनभूयात् हेमामकाः कृतागसमपि विप्रंनमस्कुरुत योननमेत् सःमत्तोदंडभाक्स्यात् अपहृतःविप्रार्थः ह
र्तारं अधःपातयति नृगंब्राह्मणगौरिव भगवान् एवंविश्राव्यनिजमंदिरंविवेश ४५ इतिदशमेचतुःषष्टितमः ६४ श्रीशु
कउवाच हेकुरुश्रेष्ठ सुहृद्दिदृक्षुः बलभद्रः रथंआस्थितः सन् गोकुलंययौ ततःगोपगोपीभिः परिष्वक्तःरामःपितरौ अभिवाद्य
आशीर्भिः अभिनंद्य हेदाशार्हनः चिरंपाहि इत्युक्त्वा अंकंआरोप्य आलिंग्यनेत्रोदकैः सिषिचतुः ततोरामः गोपवृद्धान् नत्वा कनिष्ठैः
वंदितः ततोगोपालाः रामंस्वेषु आरोग्यं पप्रच्छुः हेरामसर्वेबांधवाः कुशलं आसनेकच्चित् यूयंनःस्मरतकिम् किंच भवद्भिः कंसोहतः
सुहृज्जनाःमुक्ताः रिपून् निर्जित्यदुर्गंआश्रिताः एतद्दिष्ट्या ततोगोप्यः पप्रच्छुः हेरामकृष्णःसुखंआस्तेकिम् तथामातापितरौस्मर
तिकिम् असौपितरौद्रष्टुं आगमिष्यतिकिम् किंच अस्माकंसेवांअनुस्मरतेकिम् हेरामयदर्थेपतिपुत्रादीन्जहिमताःनःसद्यः
त्यक्त्वागतः तस्यकृतघ्नस्यवचः पुरस्त्रियः कथंगृण्हंति हेगोप्यः तत्कथयानः किंअपराःकथाः कथयत यथा अस्माभिर्विनातस्य-
कालोयाति तथैवतेन विना अस्माकं परंतुतस्यसुखेन अस्माकंदुःखेनेतिविशेषः एवंकृष्णस्यचरितंस्मृत्वास्त्रियोरुरुदुः तदारामः
कृष्णस्यसंदेशैः ताःसांत्वयामास तत्रमधुमाधवौद्वौमासौ वसन् सन् रामःक्षपासुस्त्रीगणैर्वृतः सन् यमुनोपवनेरेमे तदावरुणप्रे-
षिता वारुणीदेवी वृक्षकोटरात् पतंतीस्वगंधेन अध्यवासयत् बलःतंगंधं आघ्रायतत्रगतः सन् स्त्रीभिः सहमदिरांपपौ ततःस्रग्वी

ओ·१ ब्रह्मस्वलक्षणारणिजः पापपावकः, ओ·२ चैत्रवैशाखौ



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

ततः बलः जलक्रीडार्थं यमुनां आजुहाव ततः निजं वाक्यं अनादृत्य अनागतां तां हलाग्रेण आकृष्य आह हे पापे मां अवज्ञायनायासि अ
तः हलाग्रेण त्वां शतधा नेष्यामि ततः यमुना भीता सती नत्वा तं आह हे राम तव विक्रमं न जाने अतः हे भक्तवत्सल मां मोक्तुं अर्हसि ए
वं याचितः रामः यमुनां विसृज्य स्त्रीभिः सह जले विहृत्य बहिर्ययौ तदा लक्ष्मीः तस्मै नीलांबरे भूषणानि मालां च ददौ ततो रामः तैः स्व
लंकृतः सन् शुशुभे अद्यापि यमुना बलस्य वीर्यं सूचयतीव दृश्यते एवं व्रजे रमतः रामस्य सर्वाः निशाः एकनिशेव याताः ३३ इ
ति दशमे पंचषष्टितमः ६५ श्रीशुक उवाच हे राजन् रामे व्रजं गते सति पौंड्रकः अहं वासुदेव इति दूतं कृष्णाय प्राहिणोत् दूतस्तु
द्वारकां एत्य सभायां स्थितं कृष्णं राजसंदेशं अब्रवीत् अहं वासुदेवः एक एव न चापरः अतः त्वं मिथ्याभिधां त्यज किंच यानि अस्मच्चि
ह्नानि मौढ्यात् बिभर्षि तानि त्यक्त्वा मां शरणं एहि नो चेत् युद्धं देहि श्रीशुक उवा० एवं तत्कथनं श्रुत्वा उग्रसेनादयः जहसुः
ततः परिहासकथां अनु दूतं कृष्णः आह हे मूढ मच्चिह्नानि त्वयि प्रक्षेप्स्यामि हे अज्ञ युद्धे हतः त्वं कंकगृध्रवटैर्वृतः सन् शुनां शरणं भ-
विष्यसि ततः दूतः तं आक्षेपं स्वामिने सर्वं अकथयत् कृष्णो रथं आस्थाय काशीं जगाम तदा पौंड्रकोपि तदुद्योगं ज्ञात्वा अक्षौहिणीभ्यां
संयुक्तः सन् पुरात् निश्चक्राम तस्य पृष्ठतो रक्षकः काशीपतिरपि त्रिभिः अक्षौहिणीभिः अन्वयात् तदा हरिः कृत्रिमवेषेण स्वसदृ
शं पौंड्रकं दृष्ट्वा जहास तदा अस्य शूलगदापरिघशक्त्यृष्टिप्रासतोमरासिपट्टिशबाणैः कृष्णं प्राहरन् कृष्णस्तु पौंड्रककाशिराजयोः
चतुर्विधं बलं गदासिचक्रेषुभिः अर्दयत् ततः पौंड्रकं आह हे पौंड्रक दूतवाक्येन भवान् यत् मां आह तानि अस्त्राणि उत्सृजामि किंच
त्वया मृषा धृतं मे अभिधानं त्याजयिष्ये किंच अहं यदि युद्धं नेच्छामि तर्हि शरणं व्रजामि इति निक्षिप्त्वा बाणैः पौंड्रकं विरथीकृत्य
चक्रेण तच्छिरः अहरत् तथा काशिपतेः शिरः बाणैः छित्त्वा काशिपुर्यां अपातयत् एवं स समरे पौंड्रकं हत्वा द्वारकां आविशत् त

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

न:स: पौंड्रक: हरे: रूपंबिभ्राण: तन्मयोभवत् तत: राज द्वारे पतितं काशिपते: शिर: आलोक्य जना: किमिदं कस्यवा वक्रं इति संशयि
रे तत: काशिपते: शिर: इति ज्ञात्वा तस्त्रियः पुत्रबांधवाश्च हा हता: इत्युक्त्वा प्रारुदन् तत: तस्य पुत्र: सुदक्षिण: पितु: उत्तरक्रियां कृत्वा-
निहत्य पितृहंतारं यास्याम्यपचितिं पितु: इति बुद्ध्या निश्चित्य सोपाध्याय: सुदक्षिण: शिवं पूजयामास तत: शिव: प्रीत: सन् तस्मै
वरं वृणीष्वेत्युक्तवान् स: पितृहंतृवधोपायं वव्रे तदा शिव: आह हे सुदक्षिण त्वं ब्राह्मणै: सह आभिचार विधानेन दक्षिणाग्निंय
जस: अग्नि: अब्रह्मण्ये प्रयोजितश्चेत्तव संकल्पं साधयिष्यति इत्यादिष्ट: सुदक्षिण: तथा चक्रे तत: कुंडात् मूर्तिमान् अग्नि: उत्प
न्न: तत: सोऽग्नि: अति भीषण: सन् द्वारकां ययौ तं विलोक्य सर्वे द्वारकौकस: त्रस्त: तत: ते सर्वे भयातुरा: संत: भगवंतं आहु: हे त्रि
लोकेश पुरं प्रदहत: वन्हे: त्राहि त्राहि ततो भगवान् स्वानां भयं दृष्ट्वा प्रहस्य माभैष्ट अहं रक्षिष्यामि इत्याह तत: कृष्ण: तां शैवीं कृत्यां
ज्ञात्वा तन्नाशार्थं चक्रं आदिशत् तत्सूर्यकोटिप्रतिमं सुदर्शनं कृत्याग्निं अपीडयत् तत: अस्त्रौजसा प्रतिहता कृत्या काशीं गत्वा सर्त्वि
क्जनं सुदक्षिणं समदहत् तदनु प्रविष्टं सुदर्शनं सर्वां काशीं दग्ध्वा भूय: कृष्णस्य पार्श्वं उपातिष्ठत् य: एनं उत्तमश्लोक विक्रमं श्राव
येत् शृणुयात् स: सर्वपापै: प्रमुच्यते ४३ इति दशमे षट्षष्टितम: ६६ राजोवाच हे ब्रह्मन् अद्भुतकर्मण: रामस्य चरि
तं भूय: श्रोतुं इच्छामि श्रीशुक उवाच हे राजन् नरकस्य सखा द्विविदो नाम वानर: सख्यु: आनृण्यं कुर्वन् सन् पुरग्रामाक
र गोष्ठान् अदहत् कचित् शैलान् उत्पाट्य तै: देशान् अचूर्णयत् कदाचित् समुद्रमध्यस्थ: सन् दोर्भ्यां जलं उद्धृत्य तीरे वर्तमानान्
देशान् प्लावयामास तथा ऋषिमुख्यानां आश्रमान् भग्नवनस्पतीन् कृत्वा विष्ठामूत्रै: अग्नीन् अदूषयत् तथा पुरुषान् स्त्रीश्च १४
गिरिगुहासु निक्षिप्य शैलै: पिदधे एवं देशान् अपकुर्वन् स्त्री: दूषयन् रैवतकं गिरिं ययौ तत्र स्त्रीयूथगं रामं वारुणीं मदिरां पी

ओ॰ ३ निष्कृतिं.

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

त्वागायंतं दृष्ट्वा वानरः शाखा आरुह्य द्रुमान् कंपयन् आत्मानं दर्शयन् किलकिला शब्दं चक्रे ततः तरुण्यः तस्य कपेः धार्ष्ट्यं वीक्ष्य ज
हसुः सः कपिः रामस्य पश्यतः सतः तासां स्वगुदं दर्शयन् ताः हेलयामास ततः बलः क्रुद्धः सन् ग्रावाणं तं प्राहरत् कपिः ग्रावाणं वंचयि
त्वा मदिराकलशं गृहीत्वा तं निर्भिद्य रामं कोपयन् योषितां वासांसि आस्फालयत् एवं तस्य कपेः दृष्ट्वा रामः क्रुद्धः सन् तं हंतुं मुशलं
हलं च आदत्त ततः द्विविदोपि पाणिना शालवृक्षं उत्पाट्य बलरामं मूर्द्धनि अताडयत् रामः तं वृक्षं मूर्ध्नि गृहीत्वा तं कपिं मुसलेन अ
हनत् तदा कपिः हतमस्तकः सन् गैरिकया गिरिरिव शुशुभे ततः अन्येन वृक्षेण रामं अहनत् रामः तं वृक्षं शतधा अच्छिनत् एवं यु
ध्यन् वनं निर्वृक्षं अकरोत् ततः कपिः बलरामोपरि शिलावर्षं अकरोत् बलः तत्सर्वं चूर्णयामास ततः कपीश्वरः मुष्टिभ्यां रामवक्षसि
अताडयत् रामोपि क्रुद्धः सन् बाहुभ्यां कंठमूले तं पीडयामास सः रुधिरं वमन् अपतत् पततातेन पर्वतः चकंपे ततः अंबरे पुष्पवर्षि
णां सुरादीनां जयशब्दः नमःशब्दः साधुसाधु इति शब्दः अभूत् एवं द्विविदं हत्वा जनैः स्तूयमानः रामः स्वपुरं आविशत् २८ इति
दशमे सप्तषष्टितमः ६७ श्रीशुक उवाच हे राजन् दुर्योधनसुतां लक्ष्मणां स्वयंवरस्थां सांबः अहरत् तदा कौरवाः क्रुद्धाः संतः
ऊचुः अयं दुर्विनीतः अस्मान् कदर्थीकृत्य बलात् कन्यां अहरत् अतः इमं बध्नीत वृष्णयः किं करिष्यंति ये अस्मद्दत्तां महीं भुंजते नि
गृहीतं पुत्रं श्रुत्वा यदि इह एष्यंति तर्हि भग्नदर्पाः शांतिं यास्यंति इति कुरुवृद्धानुमोदिताः कर्णशलभूरियज्ञकेतुसुयोधनाः सांबं
बद्धुं आरेभिरे ततः सांबः तान् दृष्ट्वा चापं प्रगृह्य तस्थौ ते सांबं आसाद्य बाणैः समाकिरन् सांबोपि चापं विस्फूर्ज्य कर्णादीन् बाणैः वि
व्याध चतुर्भिः चतुरो वाहान् एकैकेन सारथीन् एकैकेन रथिनः विव्याध ते षड्वीराः तस्य तत् कर्म अपूजयन् ततः ते चत्वारः वीराः सांबस्य च
तुरो हयान् जघ्नुः एकः सारथिं जघ्ने अन्यः धनुः चिच्छेद एवं कुरवः तं सांबं विरथीकृत्य बध्वा तं स्वकन्यां च गृहीत्वा स्वपुरं विविशुः ततो या

ओ॰ २ अवज्ञां चकार। ओ॰ ४ भीष्मः तत्सहिताः षट्

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

दवाः नारदात् तच्छ्रुत्वाक्रुद्धाः संतः कुरून् प्रतिउद्यमंचक्रुः तदारामः तान्सांत्वयित्वातेषांवृष्णीनांच कलहं अनिच्छन् ब्राह्मणैः कुल-
वृद्धैश्च सहहास्तिनपुरंजगाम ततःगजाह्वयंगत्वाउपवनं आस्थितः सन् धृतराष्ट्रं प्रति उद्धवंप्रेषयामास सःउद्धवः तत्रगत्वा धृत-
राष्ट्रादीन् नत्वारामं आगतं अब्रवीत् तच्छ्रुत्वाप्रीताः संतः तं अर्चयित्वा उपायनहस्ताः रामं अभिययुः ततः ते कुरवो रामं संगम्य वि-
धिवत् संपूज्य शिरसाप्रणेमुः ततः परस्परंकुशलं अपृच्छन् अथरामः तान्बभाषे हेकुरवः उग्रसेनो राजावः यत् आज्ञापयत् तत्
श्रुत्वा शीघ्रं कुरुध्वं यूयंबहवः अधर्मेणएकंधार्मिकंजित्वा अबध्नीत तत् बंधूनां ऐक्यकाम्यया अहं सहे परंतु तं आनीयआशुसम
र्पयत एवंबलदेवस्यवचः श्रुत्वाकुरवः क्रुद्धाः संतःऊचुः अहो पादरक्षाशिरः आरोढुं इच्छति इदंमहच्चित्रम् किंच एते अस्मद्दत्तनृ
पासनाः संतःअस्मदुपेक्षयाचामरव्यजनशंखछत्रकिरीटासनशय्याः उपभुंजंते अधुनायदूनांराजचिह्नैः अलम् यतःगतत्रपाः
संतःयादवाःअस्मान् आज्ञापयंति श्रीशुकउवाच॰ हेराजन् तेअसभ्याः रामं एवं परुषंवचः आश्राव्यपुरंआविशन् एवंकुरूणां-
दौःशील्यं दृष्ट्वारामः क्रुद्धःसन् अवोचत् अहो अहं एतेषांशमं इच्छन् क्रुद्धान् यदून् कृष्णंच सांत्वयित्वा इह आगतः ते इमे मंदमतयः
मां अवज्ञाय अवाच्यशब्दान् अब्रुवन् किंच यस्य आज्ञावर्तिनः लोकपालाः सः उग्रसेनः विभुर्नेकिल किंच येनश्रीकृष्णेन पारिजा
तः आनीय भुज्यते यस्यपादयुगंश्रीःउपास्ते सःकृष्णःराजचिह्नार्हो न भवतिकिम् किंच यस्य अंघ्रिरजः लोकपालैः ब्रह्मादिभिश्चशिरो
भिः धृतंतस्यनृपासनं क्व किंच वृष्णयः कुरुभिर्दत्तं भूखंडं भुंजते वयंवृष्णयःउपानहाः कुरवःशिरः अहो एवंमत्तानां रूक्षाःगिरः कः सहेत
इत्युक्त्वा अद्यनिष्कौरवींपृथ्वीं करिष्यामीति क्रुद्धःसन् हलंगृहीत्वाउत्तस्थौ ततः हलाग्रेणपुरंउत्पाट्य गंगायांविचकर्ष तदाकौ
रवाः जातसंभ्रमाः संतः लक्ष्मणयासह सांबं पुरस्कृत्य तमेव शरणंजग्मुः ऊचुश्च हेरामरामतवप्रभावंनविदाम मूढानांनः-
भो॰७ अतः परंतानिहरिष्यामः



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

अपराधं क्षंतुं अर्हसि किंच हे राम अस्य जगतः स्थित्यादीनां त्वमेव हेतुः किंच हे अनंत इदं भूमंडलं लीलया त्वमेव मूर्ध्नि बिभर्षि तव कोपः
अखिलशिक्षार्थं अस्ति हे विश्वकर्मन् तेन मोस्कृत्वां वयं शरणं गताः श्रीशुक उवाच एवंप्रपन्नैः स्तैः प्रसादितः रामः माभैष्ट
त्याभयं ददौ तदा दुर्योधनः कुंजरान् शतानि १२ अश्वान् १२०००० रथाः ६००० दास्यः १००० एवं पारिबर्हं ददौ ततो रामः तत्सर्वं प्रति
गृह्य ससुतः सस्नुषः आयात् ततः स्वपुरं प्रविष्टः सन् बंधून् समेत्य सभामध्ये स्वचेष्टितं शशंस अद्यापि एतत् पुरं रामविक्रमं सूच
यत् गंगायां दक्षिणतः उन्नतं अनु दृश्यते ५४ इति दशमे ऽष्टषष्टितमः ६८ श्रीशुक उवाच हे राजन् नरकं निहतं श्रुत्वा त
था एकेन कृष्णेन बह्वीनां योषितां विवाहं च श्रुत्वा एकेन वपुषा युगपत् पृथग्गृहेषु षोडशसहस्रस्त्रियः कथं परिणीतवान् एतत् चि
त्रं द्रष्टुं नारदः सर्वशोभाढ्यां द्वारकां अगात् तस्यां षोडशसहस्रगृहैः समलंकृतं श्रीकृष्णस्य गृहं विवेश तत्र हरेः पत्नीनां भवने-
षु मध्ये एकतमं गृहं विवेश ततो नारदः तस्मिन् गृहे गृहे व्यजनेन परिवीजयंत्या रुक्मिण्या सह श्रीकृष्णं ददर्श ततो भगवान् तं नारदं
वीक्ष्य श्री पर्यंकात् उत्थाय तं शिरसा प्रणम्य सांजलिः सन् स्वे आसने उपवेशयामास ततः भगवान् तच्चरणौ प्रक्षाल्य तं संपूज्याह हे ब्र
ह्मन् वयं तव किंकर वाम श्रीनारद उवाच हे विभो अयं ते अवतारः जगतः निःश्रेयसाय अस्ति अतः खलानां दमः साधुसंमान-
त्वं युक्तम् हे हरे तव अंघ्रियुगुलं दृष्टं अतः कृतकृत्योस्मि श्रीशुक उवा० ततो नारदः अन्यत् गेहं प्राविशत् तत्रापि स्त्रियाउद्
वेन च सह अक्षैः क्रीडंतं ददर्श ततः तेन भक्त्या पूजितः हे नारद त्वं कदा आयातः इति पृष्टः किंच अपूर्णैः अस्मदादिभिः पूर्णानां वः किं
कर्तव्यम् तथापि नः जन्म शोभनं कुरु ततः तूष्णीमुत्थाय अन्यत् गेहं अगात् तत्रापि शिशून् लालयंतं गोविंदं आचष्ट ततो ऽन्यस्मि
न् गृहे स्नानाय उद्युक्तं अपश्यत् कुत्रचित् वितानाग्नीन् जुह्वंतं० कुत्र० पंचमहायज्ञैः यजंतं कु० द्विजान् भोजयंतं कुत्र० अवशे

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

षितंभुंजानम् कु० संध्यांउपासीनं कु० ब्रह्मजपंतं कु० असिवर्मसुखड्गचर्माभ्यांचरंतम् कुत्र० अश्वादिभिश्चरंतं कु० पर्यंकेश
यानम् कुत्र० बंदिभिस्स्तूयमानं कु० उद्धवादिभिः मंत्रयंतं कुत्र० जलक्रीडारतम् कुत्र० द्विजेभ्यः गाः ददंतम् कुत्र० इतिहास
पुराणादिश्शृण्वंतम् कु० हास्यकथयाहसंतं क्वापि धर्मंसेवमानं क्वापि अर्थकामौसेवमानम् कु० परंपुरुषंध्यायंतं कुत्र० गुरू
न्शुश्रूषयंतं कुत्र० कैश्चित् विग्रहंकुर्वंतं कु० मैत्रींकुर्वंतम् कु० सतांसंचिंतयंतम् कुपुत्रान् कन्याश्चविवाहयंतम् कु० दुहितॄ
जामात्रादीन् स्वगृहात् तद्गृहं प्रतिनयंतं कु० तत्तद्गृहात्पुनरानयंतम् कुत्र० देवान् यजंतं कु० पूर्तयंतं कु० मृगयांचरंतम् क्वचित्
तत्तद्भावबुभुत्सयागृहादिषु वेषांतरं धृत्वा चरंतम् एवंहरिंदृष्ट्वानारदः प्रहसन् उवाच हे योगेश्वर ते योगमायाः विदाम हे देव
मांअनुज्ञांदेहि अहंतवलीलांगायन् लोकान् पर्यटामि श्रीभगवानुवाच हे ब्रह्मन् अहंधर्मस्य कर्ता वक्ता अनुमोदिताऽस्मि अ
तः धर्मं लोकान् शिक्षयन् आस्थितः हे पुत्र त्वं माखिद श्रीशुकउवाच हे राजन् नारदः एवंभगवतः योगमायामहोदयं दृष्ट्वा-
विस्मितः अभूत् ततः श्रीकृष्णेन धर्मार्थकामेषु सत्कृतः नारदः तंकृष्णंस्मरन् ययौ एवंवर्तमानः भगवान् स्त्रीणांगृहेषु रेमे यः हरेः
कर्माणि गायति शृणोति अनुमोदते तस्य भगवति भक्तिर्भवति ४५ इतिदशमे एकोनसप्ततितमः ६९ श्रीशुकउवाच
हे राजन् उषसि प्राप्तायां सत्यां श्रीकृष्णैः गृहीतकंठ्यः माधवस्त्रियः कूजतः कुक्कुटान् अशपन् तदा पक्षिणः बंदिन इव श्रीकृष्णंबो
धयंतः संतः अकूजन् तं मुहूर्तं रुक्मिण्यादयः स्त्रियः पत्यालिंगनवियोगान् नामृष्यन् तदा श्रीकृष्णः ब्राह्मे मुहूर्ते उत्थाय आ
चम्य आत्मानंदध्यौ अथ अंभसि स्नात्वा वाससी परिधाय संध्यांउपास्य अग्निंहुत्वा गायत्रींजजाप ततः सूर्यंउपस्थाय देवर्षिपितॄ
न् तर्पयित्वा विप्रान् अभ्यर्च्य दिने दिने स्वलंकृतेभ्यः विप्रेभ्यः स्वलंकृताः सवत्साः गाः बद्वं २ ददौ ततः गुर्वादीन् नत्वा मंगलानि स्पृ- १६

ओ०१ चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः बद्वं चतुरशीत्यग्र सहस्राणि त्रयोदश,

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

स्नावस्त्र भूषणादिभिः आत्मानं भूषयामास ततः आज्यं आदर्शं च अवलोक्य सर्ववर्णान् अमात्यादि... कांश्च कामैः प्रतोष्य विप्रा
दीन् स्वकृतांबूलादीनि दत्वा स्वयं अग्रहीत् तावत् सूतः रथं आनीय प्रणम्य अग्रतः स्थितः ततो भगवान् सात्यक्युद्धव युतः सन्
रथं आरुरोह ततः सुधर्माख्यां सभां प्राविश्य परमासने उपविष्टः सन् वृष्णिभिर्वृतः चंद्र इव शुशुभे तत्र परिहासकाः नाना
हास्यरसैः विभुं तोषयामासुः नटाचार्याः नर्तक्यश्च ननृतुः जगुश्च सूताद्याः तुष्टुवुः ब्राह्मणाः राज्ञां कथाः चक्रुः तदा एकः
पुरुषः आगतः सः द्वारपालैः प्रवेशितः सन् कृष्णं नत्वा राज्ञां जरासंधनिरोधजं दुःखं अकथयत् हे हरे ये नृपाः जरासंधस्य दिग्विज
येन नतां न ययुः ते हे अयुते जरासंधेन दुर्गे निरुद्धाः आसन् ते त्वां ऊचुः हे कृष्ण कृष्ण वयं त्वां शरणं याताः अतः मागधाद्भय कर्म
पाशात् नः मोचय युष्मत्प्रजाः नः पीडयति तत्र यद्युक्तं तद्विधेहि दूतः आह इति ते पादमूलं प्रपन्नानां तेषां शं विधीयताम् श्री
शुकउवाच इति दूते प्रवदति सति नारदः प्रादुरासीत् भगवान् तं दृष्ट्वा उत्थाय शीर्ष्णा ववंदे ततः विधिवत्संपूज्य तं मुनिं
बभाषे हे मुने त्रयाणां लोकानां अभयं अस्ति किं किंच लोके तव अविदितं किंचिन्नास्ति अतः पांडवानां चिकीर्षितं पृच्छामहे
श्रीनारदउवाच हे विभो ते दुरत्ययाः मायाः मया बहुशो दृष्टाः तव हितं कः वेदितुं अर्हति हे ब्रह्मन् अथापि युधिष्ठिरस्य चिकी
र्षितं कथयामि हे विभो युधिष्ठिरः राजसूयेन त्वां यष्टुं इच्छति तत् भवान् अनुमोदताम् तस्मिन् यज्ञे त्वां दिदृक्षवः सुरादयः
राजानश्च समेष्यंति किंच तत्रागताः सर्वे त्वद्दर्शनादिना पूताः भविष्यंति श्रीशुकउवाच हे राजन् तत् नारदोक्तं श्रुत्वा
केशवः उद्धवं आह श्रीभगवानुवाच हे उद्धव त्वं नः सुहृत् अतः अत्र यत् कर्तव्यं तत् ब्रूहि तत्करवाम एवं उक्तः उद्धवः
भगवदाज्ञां शिरसा धृत्वा अभाषत ४७ इति दशमे सप्ततितमः ७० श्रीशुकउवाच हे राजन् उद्धवः एवं श्रीकृष्णोक्तं

अ॰ ३ एवं सर्वगृहेभ्यः पृथक् पृथक् निर्गत्य अनंतरं एक एव सन्

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

श्रुत्वानारदस्यसभ्यानां कृष्णस्यच मतंज्ञात्वा अब्रवीत् उद्धवउवाच हेदेव ऋषिणा यदुक्तं युधिष्ठिरस्य साहाय्यंतत् कार्यम्
तथाराज्ञां रक्षाच्चकार्या तत्रादौ राजसूयार्थं गंतव्यम् तेनउभयमपिसेत्स्यति किंच हेगोविंद राज्ञः विमुंचतः तवयशोभविष्य
ति सःजरासंधः भीमसेनविना अन्येषांदुःसहः अतः भीमेन द्वंद्वयुद्धे जेतव्यः सःविप्रैः अर्थितःसन् नप्रत्याख्याति अतःब्रह्मवेषंधृत्वा
भीमेनतंप्रतियुद्धंभिक्षितव्यम् ततोभीमः तवसन्निधौ तंहनिष्यति हेभगवन् जरासंधेन रुद्धानांराज्ञांस्त्रियः तवविशदंकर्म गृहेषु
गायंति अतःएवंभूतानांतासांकृपयात्वयातथैवकर्तव्यम् हेभगवन् जरासंधवधः कृतश्चेत् शिशुपालवधादयोपि फलभाःभवि
ष्यंति श्रीशुकउवाच हेराजन् इतिउद्धववचः नारदः यदुवृद्धाः कृष्णाश्च अपूजयन् अथ कृष्णः इंद्रप्रस्थंप्रतिगमनाय दारु
कादीन् आदिशत् ततःवसुदेवादीन् प्रणम्य स्त्रीभिः प्रयाणंकारयित्वा सूतानीतं स्वरथं आरुह्य चतुरंगसेनयासह निराक्रामत् ततो
नारदः श्रीकृष्णेन सत्कृतः सन् तंप्रणम्य तन्निश्चितंनिशम्य विहायसाययौ ततोभगवान् राजदूतंउवाच वःभद्रमस्तु यूयंमाभै
ष्ट जरासंधंघातयिष्यामि इत्युक्तः दूतः तत्रगत्वा नृपान् यथावत् अवदत् तेपि श्रीकृष्णस्यदर्शनंप्रत्यैक्षंत ततोहरिः आनर्ताादि
देशान् अतिक्रम्य इंद्रप्रस्थं अगमत् ततः तंश्रीकृष्णं आगतंश्रुत्वा युधिष्ठिरः सोपाध्यायः प्रहृष्टःसन् हृषीकेशंअभ्येत्य-
भ्रातृभिः सहपरिषस्वजे ततः श्रीकृष्णः युधिष्ठिरंभीष्मंचनत्वाऽर्जुनेन आलिंगितः यमाभ्यां वंदितःसन् ब्राह्मणान् वृद्धान्
नमस्कृत्य कौरवादीन् मानयामास ततोभगवान् प्रहृष्टःसन् स्वलंकृतं हास्तिनपुरं विवेश तदापौराः स्त्रियः तल्पेपतीन् गृ
हकर्मचविसृज्य कृष्णं सभार्यं द्रष्टुं आगताः सत्यः गृहान् अधिरुह्य तंपुष्पैर्विकीर्य मनसा उपगुह्य वीक्षितेन स्वागतं विद-
धुः किंच कृष्णपत्नीः वीक्ष्य ऊचुः अमूभिः किंपुण्यंकृतम् यासांचक्षुषां हरिः उत्सवंददाति ततःपौराः तत्रतत्र कृष्णं अ-



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

पूजयन् एवंसत्कृतः भगवान् राजमंदिरं प्राविशत् ततः पृथा कृष्णं विलोक्य पर्यंकात् उत्थाय परिषस्वजे ततो युधिष्ठिरः गोविं
दं गृहं आनीय हर्षेण अभिभूतः सन् पूजां नाविदत् ततः कृष्णः पितृष्वसुः गुरुस्त्रीणां च वंदनं चक्रे द्रौपद्या सुभद्रया स्वयं च वंदितः
ततः द्रौपदी रुक्मिण्याद्याः कृष्णपत्नीः वस्त्रभूषणादिभिः आनर्च ततो युधिष्ठिरः ससैन्यं सभार्यं कृष्णं सुखं निवासयामास त
तः श्रीकृष्णः अर्जुनयुतः सन् खांडवेन वह्निं तर्पयित्वा तत्र मयं मोचयित्वा राज्ञः प्रियं चिकीर्षया तत्र कतिचिन्मासान् उवास ४६
इति दशमे एकसप्ततितमः ७१ श्रीशुक उवाच हे राजन् एकदा मुनिविप्रक्षत्रियवैश्य भ्रात्राचार्यकुलवृद्धादिभिर्वृ
तः युधिष्ठिरः सभामध्ये स्थितः सन् एषां शृण्वतां सतां श्रीकृष्णं आह युधिष्ठिर उवाच हे गोविंद अहं राजसूययज्ञेन तव
विभूतीर्यक्ष्ये तत् संपादय किंच एषः लोकः तव पादकमलसेवानुभावं पश्यतु श्रीभगवानुवाच हे राजन् त्वया सम्यक्
निश्चितम् येन कर्मणा तव कीर्तिः सर्वलोकव्याप्ता भविष्यति किंच अयं क्रतुराट् ऋषिपितृदेवसुहृदां ईप्सितोऽस्ति अतः स
र्वान् राज्ञः विजित्य पृथ्वीं वशे कृत्वा संभारान् संपाद्य क्रतुं अनुतिष्ठ श्रीशुक उवाच हे राजन् एवं भगवद्वाक्यं श्रुत्वा
युधिष्ठिरः प्रीतः सन् दिग्विजयार्थं भ्रातॄन् अयुंक्त दक्षिणस्यां सृंजयैः सह सहदेवम् प्रतीच्यां मत्स्यैः सह नकुलं उदीच्यां कै-
कयैः सह अर्जुनम् प्राच्यां मद्रकैः सह भीमम् ततः ते नृपान् विजित्य दिग्भ्यः धनं आनीय युधिष्ठिराय ददुः ततः हरिः जरासं-
धं अजितं श्रुत्वा नृपतेः ध्यायतः सतः उद्धवोक्तं उपायं आह ततः भीमः अर्जुनः श्रीकृष्णश्च एते त्रयः ब्राह्मणाः भूत्वा गिरिव्र-
जं जग्मुः ततः ते आतिथ्यवेलायां तत्र गत्वा जरासंधं अयाचेरन् हे राजन् दूरं आगतान् अतिथीन् विद्धि ते भद्रं अस्तु यत् वयं
कामयामहे तत् प्रयच्छ किंच यथा साधूनां अकार्यं नास्ति तथा तितिक्षूणां दुःसहं नास्ति तथा दातॄणां अदेयं नास्ति स

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

मदर्शिनां शत्रुर्नास्ति अतः किंविशेषनिर्देशेन किंच यः अनित्येन शरीरेण यशः न संपादयति स शोच्यः निंद्यश्च हरिश्चंद्रो रंति
देव उंछवृत्तिः शिबिर्बलिः व्याधः कपोतो बहवोह्यध्रुवेण ध्रुवं गताः श्रीशुक उवाच हे राजन् ततः जरासंधः आकृत्यादि
भिः तान् क्षत्रियान् ज्ञात्वा अचिंतयत् एते ब्रह्मलिंगधराः राजन्यबंधवः संति तथापि तेभ्यः आत्मानमपि भिक्षितं ददामि यतः वि
प्रव्याजेन विष्णुना ऐश्वर्यात् भ्रंशितस्य बलेः कीर्तिः श्रूयते गुरुणा वारितोपि बलिः द्विजरूपिणे विष्णवे महीं प्रादात् किंच ब्राह्म
णकार्यार्थे विपुलं यशः असंपादयता क्षात्रदेहेन को नु अर्थः न कोपीति निश्चित्य कृष्णार्जुनभीमान् आह हे विप्राः कामः व्रियताम्
वः आत्मशिरोपि ददामि श्रीभगवानुवाच हे राजेंद्र नः द्वंद्वयुद्धं देहि वयं युद्धार्थिनः प्राप्ताः अन्नार्थिनो न असौ वृकोदरः अ
यं अर्जुनः अनयोः मातुलेयं मां कृष्णां ते रिपुं विद्धि एवं श्रुत्वा राजा उच्चैः प्रहस्य अमर्षितः सन् आह हे मंदाः तर्हि वः युद्धं ददामि
परंतु हे कृष्ण भीरुणा त्वया न योत्स्ये अयं अर्जुनोपि मे समो न भीमस्तुल्यबलोऽस्ति इत्युक्त्वा भीमसेनाय महतीं गदां दत्वा द्विती
यां स्वयं आदाय पुरात् बहिर्निर्जगाम ततः रणांगणे अन्योन्यसंयुक्तौ भूत्वा गदाभ्यां जघ्नतुः ततः विचित्राणि मंडलानि चरतो-
स्तयोः युद्धं शुशुभे ततः गदयोः चटचट इति शब्दः अभवत् एवं तयोः प्रहरतोः निर्विशेषं युद्धं अभूत् एवं दिवा युध्यतोः निशि सु
हृद्वत्तिष्ठतोः सतोः सप्तविंशति दिनानि निरगन् ततः एकदा भीमः कृष्णं प्राह हे माधव जरासंधं जेतुं अहं न शक्तः ततः शत्रोर्ज
न्ममृती जराकृतं जीवितं च विद्वान् श्रीकृष्णः स्वतेजसा भीमं आप्याययन् अचिंतयत् ततः हरिः करेण शाखां गृहीत्वा पाटय-
न्निव भीमं संकेतेन दर्शयामास भीमः तद्विज्ञाय शत्रुपादयोः गृहीत्वा भूमौ निपात्य एकं पादं पदाक्रम्य दोर्भ्यां अन्यं पादं प्रगृह्य गुदतः
पाटयामास ततः एकपादोरुवृषणकटिपृष्ठस्तनांसबाहूक्षिभ्रूकर्णे द्वे शकले प्रजाः ददृशुः एवं मगधेनिहते सति महान् हाहाकारः आसीत्
ओ॰ २ मुद्गलः ओ॰ २ अनित्येन शरीरेण लोकं गताः



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

ततः कृष्णार्जुनौ भीमं आलिंग्य पूजयामासतुः ततो भगवान् जरासंधपुत्रं सहदेवं मागधानां पतिं अभ्यषिंचत् ततः मागधेन रुद्धा
न् राज्ञः मोचयामास ४८ इति दशमे द्विसप्ततितमः ७२ श्रीशुकउवाच हे राजन् ये अष्टशताधिकविंशतिसहस्रं राजा
नः दिग्विजये जरासंधेन निर्जिताः गिरिद्रोण्यां रुद्धाश्च ते मलिनाः शुष्कमुखाः संरोधपरिकर्शिताः ततो निर्गताः संतः कृष्णं ददृ
शुः कथंभूतं घनश्यामम् श्रीवत्सांकम् शंखचक्रगदापद्मधरं वनमालायुतं एवंभूतं कृष्णं दृष्ट्वा मूर्धभिः प्रणम्य प्रांजलयः
संतः गीर्भिः प्रशशंसुः राजानऊचुः हे देव तुभ्यं नमः घोरसंसृतेः निर्विण्णान् नः पाहि हे नाथ एनं जरासंधं वयं दोष-
दृष्ट्या न पश्यामः यतः राज्ञां राज्यच्युतिः तवानुग्रहः किंच मदोन्नद्धः नृपः श्रेयो न विंदते तव मायामोहितः सन् संपदः अचलाः
मन्ये वयं पुरा मदांधाः संतः त्वां अविगणय्य स्थिताः त एव वयं अद्य तव चरणौ स्मराम अतः वयं राज्यं न स्पृहयामहे तस्मात्
तव चरणाब्जयोः अविस्मृतिः येन स्यात् तथा उपायं समादिश कृष्णाय वासुदेवाय हरये परमात्मने प्रणतक्लेशनाशाय गो
विंदाय नमो नमः श्रीशुकउवाच एवं राजभिः स्तूयमानः भगवान् तान् आह श्रीभगवानुवा० हे भूपाः अद्य
प्रभृति वः मयि सुदृढा भक्तिः अस्तु भवद्भिः मद्भजनं कर्तव्यमिति निश्चितं एतद्दिष्ट्या किंच नृणां श्रीमदेन उद्धं धनं पश्यामि
यतः हैहयो नाहुषो वेनो रावणो नरकोऽपरे एते श्रीमदेन स्थानात् भ्रंशिताः यूयं एतत् ज्ञात्वा मां यज्ञैः यजंतः संतः धर्मेण प्रजाः र
क्षत किंच देहादौ उदासीनाः संतः मयि मनः आवेश्य अंते मां यास्यथ श्रीशुकउवाच कृष्णः नृपान् इत्यादिश्य ततस्तेषां
मज्जनकर्मणि पुरुषान् स्त्रियश्च न्ययुंक्त ततः तेषां सहदेवेन वस्त्रभूषणादिभिः पूजां कारयामास एवं मुकुंदेन पूजिताः राजानः तं कृ
ष्णं ध्यायंतः संतः रथान् आरुह्य स्वदेशान् आगत्य कृष्णचेष्टितं प्रकृतिभ्यः जगदुः ततः श्रीकृष्णः सहदेवेन पूजितः सन् पार्थाभ्यां संयु-

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

तःप्रायात् ततः ते जितारयः इंद्रप्रस्थं गत्वा शंखान् दध्मुः तच्छ्रुत्वा जनाः मागधं शांतं मेनिरे युधिष्ठिरः पूर्णमनोरथः आस ततः भी
मार्जुनजनार्दनाः युधिष्ठिरं नत्वा सर्वं अकथयन् तत् भगवदनुकंपितं ज्ञात्वा युधिष्ठिरः आनंदाश्रुकलां मुंचन् सन् किंचन नोवाच ३५
इति दशमे त्रिसप्ततितमः ७३ श्रीशुक उवाच हे राजन् युधिष्ठिरः एवं कृष्णस्य अनुभावं श्रुत्वा प्रीतः सन् तं अब्रवीत् युधिष्ठिर
उवाच हे भगवन् ये सनकादयः त्रैलोक्यगुरवोपि यस्य तव आज्ञां शिरसा वहंति सः त्वं ईशमानिनां नः आज्ञां धत्से नत अत्यंत विडंब
नम् तथापि परमात्मनः तव तेजः कर्मभिः न वर्धते न ह्रसते च हे अजित तव भक्तानां अहं मम ते नित्वं तवेति भेदबुद्धिर्नास्ति किंपुनस्तव ना
स्तीति वक्तव्यम् श्रीशुक उवाच इत्युक्त्वा कृष्णानुमोदितः युधिष्ठिरः यज्ञोचिते वसंतादिकाले होतृप्रमुखान् ऋत्विजः वव्रे ते च व्या
सः १ भरद्वाजः २ सुमंतुः ३ गौतमः ४ असितः ५ वसिष्ठः ६ च्यवनः ७ कण्वः ८ मैत्रेयः ९ कवषः १० त्रितः ११ विश्वामित्रः १२ वामदेवः १३ सुमतिः
१४ जैमिनिः १५ क्रतुः १६ पैलः १७ पराशरः १८ गर्गः १९ वैशंपायनः २० अथर्वा २१ कश्यपः २२ धौम्यः २३ रामः २४ भार्गवः २५ आसुरिः २६ वीति
होत्रः २७ मधुच्छंदाः २८ वीरसेनः २९ अकृतव्रणः ३० तथा अन्ये द्रोणभीष्मकृपादयः सुतैः सह धृतराष्ट्रः विदुरः चत्वारो वर्णाश्च तत्र ईयुः
ततः ते ब्राह्मणाः स्वर्णलांगलैः कर्षणादिभिः भूमिं संशोध्य नृपं दीक्षासंस्कारयुक्तं अकुर्वन् तत्र यज्ञे उपस्कराः हैमाः आसन् ततः विरिं-
चिभवसंयुताः इंद्रादिलोकपालाः सिद्धगंधर्वविद्याधरोरगाः मुनयः यक्षरक्षांसि खगकिन्नरचारणाः राजानः राजपत्न्यश्च राजसू
यं समीयुः ततो ऋत्विजः महाराजं राजसूयेन अयाजयन् ततः सोमाभिषवदिने युधिष्ठिरः ऋत्विजः सभ्यांश्च अर्चितुं सभांप्राप्तः त
दा सभासदः अग्रपूजार्हं विमृशंतः संतः योग्यानां बाहुल्यात् यदा नाध्यगच्छन् तदा सहदेवः अब्रवीत् हे सभ्याः एषः अच्युतः अग्रपूजां अ
र्हति यतः यदात्मकं इदं विश्वं चक्र तव अश्वयदात्मकाः किंच स्वयं अजः सन् इदं विश्वं सृजत्यवति हंति च तस्मात् कृष्णाय परमार्हणं दीयतां एवं-



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

कृतेसतिसर्वेषांपूजनंस्यात् इत्युक्त्वासहदेवः तूष्णींअभूत् तच्छ्रुत्वासर्वेसभ्याः साधुसाधुइतितुष्टुवुः ततः राजाविप्राणांसाधु-
साधुइति घोषंश्रुत्वासभासदां अभिप्रायंचज्ञात्वाप्रीतःसन् हृषीकेशं अपूजयत् तदातत्पादौप्रक्षाल्य तदपः सहकुटुंबः शिरसि
धृत्वावस्त्रभूषणादिभिः श्रीकृष्णंपूजयित्वा अश्रुपूर्णाक्षः सन् तंईक्षितुंनाशकत् इत्थंपूजितंकृष्णंवीक्ष्य सर्वेजनाः तंनेमुः तदा
पुष्पवृष्टयः पेतुः ततः शिशुपालः तत्सर्वंदृष्ट्वाक्रुद्धः सन् आसनात् उत्थाय बाहुंउत्क्षिप्य भगवते परुषवाक्यानिश्रावयन् सन्इ
दंआह हेसभ्याः कालोदुरत्ययः इतिश्रुतिः सत्या यतः वृद्धानामपिबुद्धिः बालवाक्यैर्भिद्यते हेसभ्याः पात्रविदां श्रेष्ठाः यूयंकृष्णः
समर्हणेसंमंतइतिबालभाषितंमागृण्हीत अहोतपआदियुक्तान् ऋषीन् अतिक्रम्यगोपालः सपर्यांकथं अर्हति यथाकाकः
पुरोडाशंतथा किंच अयंसर्वधर्मबहिष्कृतः स्वैरवर्तीअतः पूजांकथंअर्हति किंच येषांकुलंययातिनाशप्तम् तएवसमुद्रेदुर्गं-
कृत्वाप्रजाः बाधंते सः चैद्यः एवमादीनि परुषवाक्यानिबभाषे तथापिभगवान् किंचिन्नोवाच यथासिंहः शिवारुतम् तदा
सभ्याः कर्णौपिधायशिशुपालंशपंतः संतः निर्जग्मुः यतः यः पुमान् भगवतः तद्भक्तस्यच निंदांश्रृण्वन् ततोनापैतिसः अधोयाति
ततः पांडवाः मत्स्यकैकयसृंजयाश्च क्रुद्धाः संतः शिशुपालंहंतुंउत्तस्थुः ततः चैद्यः कृष्णपक्षीयान् भर्त्सयन् खड्गचर्मणीजगृहे ता
वत् कृष्णः उत्थाय स्वान् निवार्य चक्रेणरिपोः शिरः जहार तदाकोलाहलः आसीत् ततः तदनुयायिनः भूपाः दुद्रुवुः चैद्यदेहोत्थं-
ज्योतिः श्रीकृष्णंआविशत् ततोधर्मः ऋत्विग्भ्यः सदस्येभ्यः दक्षिणांदत्वा अवभृथंचक्रे ततः कृष्णः राज्ञः क्रतुंसाधयित्वा तत्र
कतिचिन्मासान् उवास ततः राजानंअनुज्ञाप्यस्वपुरंययौ हेपरीक्षित् विप्रशापात् वैकुंठवासिनोः जन्मतेअनुवर्णितम् ततोयुधि
ष्ठिरः इंद्रइवशुशुभे ततः राज्ञासत्कृताः सर्वेकृष्णंक्रतुंचशंसंतः स्वधामानियुः दुर्योधनस्तु तदसहन् नमुमुदे यःइदंचैद्यवधादि

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

कंकर्मराजमोक्षंयज्ञंचकीर्तयेत् सःसर्वपापैःप्रमुच्यते ५४ इतिदशमेचतुःसप्ततितमः ७४ राजोवाच हेब्रह्मन्युधिष्ठि
रस्ययज्ञमहोदयंदृष्ट्वादुर्योधनंविनासर्वेमुमुदिरे इतित्वन्मुखात्श्रुतम् तत्रकारणंउच्यताम् ऋषिरुवाच तेपितामहस्यय
ज्ञेबांधवाःपरिचर्यायांआसन् तेचयथामहानसाध्यक्षोभीमः धनाध्यक्षःसुयोधनःपूजायांसहदेवःनानावस्तुसाधनेनकुलःगु
रुशुश्रूषणेऽर्जुनःपादप्रक्षालनेकृष्णः परिवेषणेद्रौपदी दानेकर्णःतथासात्यक्यादयः योजिताःसंतःनानाकर्मसुप्रवर्तंतेस्म एवंय
ज्ञंसमाप्यगयायांअवभृथस्नपनंचक्रुः तदावादित्राणि नेदुःनर्तक्यः ननृतुःगायकाःजगुःतदायदुसृंजयाद्याःयजमानपुरःसराः
संतःचतुरंगसैन्यैःसहनिर्ययुः तथाऋत्विजादयःब्रह्मघोषेणनिर्ययुःदेवादयःपुष्पवृष्टिंकुर्वंतःसंतःतुष्टुवुःस्वलंकृताःनराःनार्य
श्चमिथोविजह्नुः तथाराजपत्न्यःमातुलेयैःसखिभिश्चसिच्यमानाःसत्यःविरेजुःताःदेवान् सर्वांश्च दृतीभिःसिषिचुः तदायुधि
ष्ठिरः रथंआरूढःसन् स्वपत्नीभिः शुशुभे क्रियाभिः क्रतुराडिव ततःतेऋत्विजःपत्नीसंयाजान् अवभृथसंबंधिकर्माणि अनुष्ठा
ययुधिष्ठिरंस्नापयांचक्रुःतदानरदुंदुभिःसमंदेवदुंदुभयोनेदुःदेवर्षिपितृमानवाःपुष्पवर्षाणिमुमुचुःततःसर्वेनराःतत्रसस्नुःअथ
राजाक्षौमेवाससीपरिधायऋत्विगादीन् आभरणांबरैःआनर्च ततोनृपःबंधुज्ञातिनृपमित्रसुहृदादीन्पूजयामास ततःसर्वेजनाः
नार्यश्चविरेजुःततःऋत्विजःसदस्याःअन्येब्राह्मणादयश्चदेवर्षिपितृभूतानिलोकपालाःतेनपूजिताःसंतःतंअनुज्ञाप्यस्वधामानिययुः
ततोयुधिष्ठिरःसुहृदादीन्कृष्णंचनिवासयामास भगवानपिसांबादीन्द्वारकांप्रस्थाप्यस्वयंतत्रन्यवात्सीत् एकदादुर्योधनःयुधि
ष्ठिरस्यश्रियंयज्ञमहत्त्वंचदृष्ट्वाअतप्यत् यस्मिन्गृहेनरेंद्रादीनांविभूतयःभांतिताभिःसहद्रौपदीपतीनुउपतस्थे कदाचित्सभायांबं २०
धुभिःकृष्णेनचवृतःयुधिष्ठिरःकांचनासनेआसीनः बंदिभिःस्तूयमानःसन्विरेजे तदाबंधुभिःसहदुर्योधनःअसिहस्तःतत्रविवेश त-

ओ·७ उदकनोदनचर्मयंत्रैः सेचनपात्रैश्च· ओ·१ सभायाम्·

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

तः तस्यांजलभ्रांत्यास्थले वस्त्रांतं आकुंचितवान् तथाऽग्रेस्थलभ्रांत्याजले अपतत् तदा भीमः स्त्रियः अपरे नृपतयः राज्ञानिवार्य माणा अपिजहसुः तदा दुर्योधनव्रीडितः संन् तूष्णीं गजाह्वयं प्रययौ तदा हाहेति शब्दोऽभूत् युधिष्ठिरः विमनाः अभवत् भगवान् भूभारंजिहीर्षुः तूष्णींआस हे राजन् यज्ञे दुर्योधनस्य दौरात्म्यं यत्पृष्टं तत्ते कथितम् ४० इतिदशमे पंचसप्ततितमः ७५

श्रीशुकउवाच हे राजन् अथाऽन्यदपि कृष्णस्य अद्भुतं कर्म शृणु एकदा रुक्मिण्युद्वाहे आगताः शाल्वःजरासंधादयश्च ते यदुभिर्निर्जिताः तदा सर्वराज्ञां शृण्वतां सतां शाल्वः प्रतिज्ञां अकरोत् अद्य अयादवीं महीं करिष्ये मम पौरुषं पश्यत इति प्रतिज्ञाय पांसुमुष्टिं सकृत् कुर्वन् शिवं आराधयामास ततः वर्षांते शिवः तुष्टः सन् शाल्वं प्रति वरं वृणीष्व इत्युवाच तदा शाल्वः देवासुरादीनां अभेद्यं वृष्णि भीषणं विमानं वव्रे तदा शिवः तथेति प्रतिज्ञाय मयं आदिष्टवान् ततः मयः लोहमयं सौभसंज्ञं पुरं निर्माय शाल्वाय प्रादात् ततः शाल्वः कामगं यानं लब्ध्वा द्वारकां आगत्य सेनया तां पुरीं रुध्वा उपवनोद्यानानि बजंभ किंच विमानाद्यात् शस्त्रवृष्टयः शिलाः द्रुमाः अशनयः सर्पाः जलोपलाश्च निपेतुः एवं सौभेन पीड्यमाना द्वारका शं नाभ्यपद्यत तदा प्रद्युम्नः तेन बाध्यमानाः प्रजाः वीक्ष्य मा भैष्टेत्युक्त्वा रथारूढः सन् निर्ययौ तदनु सात्यकिः चारुदेष्णः सांबः अक्रूरः हार्दिक्यः भानुविंदः गदः शुकसारणौ एते अपरे च चतुरंगसेनया सह निर्ययुः ततः शाल्वानां यदुभिः सह युद्धं प्रवृत्तं तदा प्रद्युम्नः दिव्यास्त्रैः शाल्वस्य मायाः नाशयामास ततः शाल्वस्य सेनान्यं पंचविंशतिबाणैः विव्याध शाल्वं शतेन तत्सैनिकान् एकैकेन सारथीन् दशभिः२ वाहनानि त्रिभिः२ अताडयत् तत् प्रद्युम्नस्य अद्भुतं कर्म दृष्ट्वा स्वसैनिकाः तं पूजयामासुः ततः तत्सौभं कदाचिद्बहुरूपं कदा एकरूपं क्वचिद् दृश्यते क्वचिन्न दृश्यते एवं परैः अवितर्क्यं अभूत् किंच क्व॰ भूमौ क्व॰ आकाशे क्व॰ गिरिमूर्द्धनि क्व॰ जले एवं भ्राम्यत् सत् सौभं अनवस्थितं अभूत् तदा यत्र यत्र स सौभः शा-

CC-0. Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

ल्वः दृश्यते तत्र तत्र वृष्णियूथपाः शरान् अमुंचन् एवं शरैः पीड्यमानपुरानीकः शाल्वः अमुह्यत् ततः द्युमान् नाम शाल्वामात्यः प्रद्युम्नंआ- 
साद्य गदया आर्हत्य व्यनदत् तदा सूतः विशीर्णवक्षसं प्रद्युम्नं रणात् अन्यत्र निनाय ततः प्रद्युम्नः मुहूर्तेन लब्धसंज्ञः सन् सारथिं अब्रवीत् हे
सूत यत् रणात् मम अपसरणं कृतं तत् असाधु यतः सूतेन त्वया प्राप्त किल्बिषात् मत्तो विना यदुकुलजः रणविच्युतः कोपि न श्रूयते किंच पित
रौ अभिसंगाम्यता भ्यां पृष्टः सन् आत्मनः योग्यं किंनु वक्ष्ये किंच भ्रातृभार्याः मां इसंत्यः सत्यः मत् क्लैब्यं कथयिष्यंति सारथिरुवाच हे
आयुष्मन् सूतः रथिनं रथी सूतं च रक्षेदिति धर्मं विजानता मया एतत् कृतं किंच त्वं शत्रुणा गदयाहतः मूर्च्छितः अतो मया रणात् अपनीतः ३३
इति दशमे षट्सप्ततितमः ७६ श्रीशुकउवा॰ हे राजन् ततः सः प्रद्युम्नः सलिलं उपस्पृश्य धृतकार्मुकः सन् द्युमतः पार्श्वं मानयेति सारथिंआ
ह ततः प्रद्युम्नः द्युमंतं प्रति रुध्य अष्टभिः शरैः अविध्यत् तत्र चतुरो ऽश्वान् चतुर्भिः एकेन सूतम् द्वाभ्यां धनुः केतुं च एकेन शिरः अहनत् तदा गदा
दयः सौभपतेः बलं जघ्नुः ततः सौभेयाः छिन्न ग्रीवाः संतः समुद्रे पेतुः एवं यदूनां शाल्वानां सप्तविंशत्यहोरात्राणि युद्धं अभूत् तदा इंद्रप्रस्थं ग
तः कृष्णः घोराणि निमित्तानि पश्यन् कुरुवृद्धान् अनुज्ञाप्य द्वारकां ययौ तदा पथि एवं अचिंतयत् अहं रामसहितः इह आयातः अतः चैद्यप
क्षीयाः राजानः नूनं मे पुरीं हन्युः एवं चिंतयन् द्वारकां एत्य स्वानां तत्कदनं वीक्ष्य सौभं शाल्वं च वीक्ष्य पुररक्षणे रामं नियोज्य केशवः दारुकं प्रा
ह मम रथं शाल्वस्य अंतिकं शीघ्रं प्रापय इत्युक्तः दारुकः रथं आस्थाय चोदयामास ततः शाल्वः युद्धे प्रविशंतं कृष्णं आलोक्य सूतायं शक्तिं
प्राहरत् ततः कृष्णः तां शक्तिं शरैः शतधा च्छिनत् तथा शाल्वं षोडशभिर्बाणैः विध्वा शरजालैः सौभं अविध्यत् ततः शाल्वः शौरेः सव्यं बा-
हुं बिभेद तदा हस्तात् शार्ङ्गं अपतत् तदा हाहाकारः आसीत् ततः शाल्वः उच्चैः विनद्य जनार्दनं आह हे मूढ त्वया मे सख्युः शिशुपालस्य भ्रा 
र्या हृता सत्त्व सभामध्ये हतः तं त्वां अद्य बाणैः मृत्युं नयामि यदि मम अग्रतः स्थास्यसि श्रीभगवानुवा॰ हे मंद त्वं वृथा कथसे अंतिके मृ

औ·२ मद्वस्य· औ·४ दारुकाय·

त्वं न पश्यसि किंच शूराः पौरुषं दर्शयंति न बहु भाषंते इत्युक्त्वा कृष्णः गदया शाल्वं जत्रौ अताडयत् तदा सः रक्तं वमन् चकंपे तदा गदा-
यां निवृत्तायां शाल्वः अंतरधीयत ततः मुहूर्तेन पुरुषरूपः आगत्य अच्युतं नत्वा देवक्या प्रहितोऽस्मि इति रुदन् वचः प्राह हे कृष्ण शाल्वे
न तव पिता बद्ध्वा नीतः ततः कृष्णः विप्रियं निशम्य प्राकृतवत् बभाषे अरे अजेयं रामं जित्वा शाल्वेन मे पिता कथं नीतः तस्मात् विधिर्बल
वान् इति गोविंदे वदति सति शाल्वः वसुदेवमिव आनीय कृष्णं उवाच हे कृष्ण एषः ते पिता अमुं तव वीक्षितः सतः वधिष्ये त्वं ईश चेत्पा
हि सः एवं निर्भर्त्स्य खड्गेन वसुदेव शिरः छित्वा आदाय सौभं आविशत् ततः कृष्णः स्वतः सिद्धज्ञानवानपि मुहूर्तं मानुषस्वभावे निमग्नः
आस्ते ततः तत्सर्वं माया इति ज्ञातवान् तदा तत्र दूतं पितुर्देहं च नाऽपश्यत् ततः सौभस्थं रिपुं वीक्ष्य तं हंतुं उद्यतः हे राजर्षे केचन ऋषयः पू
र्वापरानुसंधानरहिताः संतः एवं वदंति परंतु यत्पादसेवया ऐश्वर्यं पदं लभंते तस्य शोकादिकं कुतः अतो न ते तद्वचनं सत्यं ततः कृष्णः तं शा-
ल्वं शरैः विध्वा वर्म धनुश्च शिरोमणिं च छित्वा गदया सौभं च बभंज ततः तत् सौभं तोये पपात ततः शाल्वः सौभं त्यक्त्वा गदां गृहीत्वा
भूतले स्थितः सन् अच्युतं अभ्यगात् तदा कृष्णः तस्य बाहुं भल्लेन छित्वा तद्वधाय चक्रं गृहीत्वा तेनैव चक्रेण कुंडलकिरीटयुक्तं शा-
ल्वस्य शिरः जहार तदा नृणां हाहेति शब्दः बभूव तस्मिन्निपतिते पापे सौभे च गदया हते नेदुर्दुंदुभयो राजन् दिवि देवगणेरिताः
सखीनामपचितिं कुर्वन् दंतवक्त्रो रुषाऽभ्यगात् ३६ इति दशमे सप्तसप्ततितमः ७७ श्रीशुक उवाच हे राजन् ततः सः दंत
वक्त्रः मृतानां चैद्यपौंड्रकशाल्वानां पारोक्ष्य सौहृदं कुर्वन् एकः पदातिः गदापाणिः सन् व्यदृश्यत तदा कृष्णः तं आलोक्य रथात् उत्तीर्य
तं रुरोध ततः सः कारूषः गदां उद्यम्य मुकुंदं प्राह हे भगवन् त्वं अद्य मम दृष्टिपथं गतः एतद्दिष्ट्या हे कृष्ण त्वं नः मातुलेयः मां जिघांससि
अतः त्वां गदया हनिष्ये तर्हि मित्राणां आनृण्यं उपैमि एवं रूक्षवाक्यैः कृष्णं व्यथयन् सन् गदया मूर्ध्नि अताडयत् ततः कृष्णोपि कौमो

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

दन्त्यास्तनांतरे आहनत् तदा दंतवक्त्रः मुखाद्रुधिरं वमन् केशबाहुंघ्रीन् प्रसार्य व्यसुः धरण्यां अपतत् तदा सर्वेषां पश्यतां सतां तद्‌ध्‌यज्योतिः कृष्णं प्राविशत् ततः तद्भ्राता विदूरथः शोकव्याप्तः सन् असिचर्मभ्यां तज्जिघांसया आगच्छत् तदा कृष्णः चक्रेण तस्य शिरो जहार एवं सौभ शाल्वादीन् हत्वा सुरमानव मुनि सिद्धादिभिः उपगीयमानविजयः वृष्णिभिर्वृतः सन् अलंकृतां पुरीं विवेश एवं योगेश्वरः कृष्णः बलिष्ठानपि जयति तथापि पशुदृष्टीनां कचिन्निर्जित इति प्रतीयते ततः एकदा रामः कुरूणां पांडवैः सह युद्धोद्यमं श्रुत्वा तीर्थयात्राव्याजेन प्रययौ ततः सः प्रभासे स्नात्वा देवर्षिपितृमानवान् संतर्प्य सन्मुखं सरस्वतीं ययौ ततः पृथूदकं बिंदुसरः त्रितकूपं सुदर्शनतीर्थं विशालं ब्रह्मतीर्थं चक्रतीर्थं प्राचीं सरस्वतीं यमुनां गंगां तदनु यानि तीर्थानि तानि सर्वाणि गत्वा यत्र ऋषयः सत्रं आसते तं नैमिषं जगाम तदा मुनयः तं रामं इति ज्ञात्वा उत्थाय प्रणम्य अर्चयन् ततः पूजितः सः रामः अप्रत्युत्थायिनं रोमहर्षणं ऐक्षत तदा क्रुद्धः सन् आह अहो असौ प्रतिलोमजः सूतः विप्रेभ्यः उच्चासने आस्ते ततः वधं अर्हति किंच अयं ऋषेः शिष्यो भूत्वाऽनेन सेतिहासपुराणानि धर्मशास्त्राणि अधीतानि तथापि अविनीतस्य गुणाय न भवंतीत्युक्त्वा असद्वधान्निवृत्तोपि करस्थेन कुशाग्रेण अहनत् तदा खिन्नमानसाः मुनयः संकर्षणं ऊचुः हे प्रभो त्वया अधर्मः कृतः यावत् सत्रं समाप्यते तावत् अस्य अस्माभिः ब्रह्मासनं आयुश्च दत्तम् अजानता त्वया ब्रह्मवधः कृतः यदि हि तव नियामकः वेदो न तथापि हे लोकपावन त्वं ब्रह्मवध प्रायश्चित्तं यदि करिष्यसि तर्हि लोकसंग्रहः स्यात् अन्यथा न श्रीभगवानुवाच॰ हे ऋषयः अहं वधप्रायश्चित्तं करिष्ये अतः मुख्यकल्पे यावान् नियमः तावान् उपदिश्यताम् किंच एतस्य दीर्घं आयुः बलं इंद्रियपाटवं च यत् भवद्भिः अपेक्षितं तन् कृत सर्वं साधये ऋषय ऊचुः हे राम तव अस्त्रस्य मृत्योश्च अस्मद्वचः सः सत्यत्वं यथा स्यात् तथा विधीयताम् श्रीभगवानुवाच॰ हे मुनयः पुत्रः आत्मैव उत्पन्नोस्ति अतः अस्य पुत्रः रोमहर्षणः आयुरिंद्रियबलवान् पुरा- २२

पावकाभवेत् वः अन्यः कः कामोस्तिनतत्ब्रूत   ऋषयऊचुः   हेभगवन् बल्वलोनामदैत्यः पर्वणिपर्वणि एत्यनः सत्रंदूषयति तंपापंजहि ततः भारतंवर्षंप्रदक्षिणीकृत्यद्वादशान् मासान् तीर्थस्नायीसन् चत्वारिकृच्छ्राणि चरित्वाविशुध्यसे ३९   इतिद० सप्तसप्ततितमः ७८

श्रीशुकउवा०   हेराजन् ततः पर्वणिप्राप्तेसति पांसुवर्षणः पूयगंधः वायुरभूत् ततः यज्ञशालायां अमेध्यमयंवर्षं अभवत् ततः शूलधृक्बल्वलः अदृश्यत तंदृष्ट्वारामः मुसलंहलंच अस्मरत् तदातेतूर्णंउपतस्थतुः ततः गगनेचरंतंहलाग्रेण आकृष्य मुसलेन मूर्ध्नि अहनत् तदासः असृक्वमन् आर्त्तस्वरंच मुंचन् भुवि अपतत् ततः ऋषयः रामं संस्तुत्य आशिषः प्रयुज्य अभ्यषिंचन् ततः रामायवैजयंतींमालांदिव्यवस्त्राभरणानिचददुः अथतैः अनुज्ञातः रामः कौशिकीं एत्यतत्रस्नात्वा सरयूद्गमसरोवरं अगात् ततः प्रयागंगत्वा तत्रस्नात्वादेवादीन्संतर्प्यपुलहाश्रमंजगाम ततः गोमतींगंडकींविपाशां शोणन्हृदंच स्नात्वागयांगत्वापितॄन् इष्ट्वागंगासागरसंगमेउपस्पृश्यमहेंद्राद्रौरामंदृष्ट्वासंपूज्य सप्तगोदावरींवेणांपंपांभीमरथींगत्वाततः स्कंदंदृष्ट्वाश्रीशैलंययौ ततः द्रविडेषुव्यंकटंदृष्ट्वा ततः कामकोष्णींकांचीपुरींकावेरींश्रीरंगंऋषभाद्रिंदक्षिणमथुरांसामुद्रसेतुंगत्वातत्रब्राह्मणेभ्यः अयुतधेनूः अदात् ततः कृतमालांताम्रपर्णींमलयंकुलाचलंगत्वातत्रसमासीनंअगस्त्यंनमस्कृत्यतेनानुज्ञातः सन्दक्षिणसमुद्रंगत्वातत्रकन्याख्यांदुर्गांददर्श ततः अनंतपुरंआगत्यपंचाप्सरसंसरः गत्वातत्रस्नात्वागवायुतंददौ ततः केरलादिदेशान्गत्वागोकर्णाख्यंशिवक्षेत्रं आगत्यततः द्वैपायनीं आर्यांदृष्ट्वाशूर्परकं अगात् ततः तापींपयोष्णींनिर्विंध्यांउपस्पृश्यदंडकंप्रविश्यरेवांअगमत् ततः मुनितीर्थंउपस्पृश्यप्रभासंपुनरागमत् तत्रद्विजैः कथ्यमानंकुरुपांडवयुद्धेसर्वराजन्यनिधनंश्रुत्वाभूभारंहृतंमेने ततः भीमदुर्योधनयोः गदाभ्यांयुध्यतोः सतोः तौप्रतिवारयिष्यन्कुरुक्षेत्रंजगाम तंदृष्ट्वायुधिष्ठिरः नकुलसहदेवौ कृष्णार्जुनौच अभिवाद्यकिंवदिष्यतीतिभियातूष्णींअभवन् ततः रामः उभौभीमदुर्योधनौगदापाणीमंडलानिचरंतौ

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

दृष्ट्वाइदमब्रवीत् हेराजन् हे वृकोदर युवांतुल्यबलौस्तः यतः एकंबलाधिकं अपरंशिक्षयाधिकं अहंमन्येतस्मात् युवयोर्मध्ये एकतरस्य जयः पराजयोवानदृश्यते अतोविफलः रणःविरमतु एवंउक्तौतौतद्वाक्यंनजगृहतुः तद्दिष्टं मन्वानःरामः द्वारवतींययौ ततः उग्रसेनादीन्

संगम्यपुनर्नैमिषंअगात् ततःतंरामंऋषयःक्रतुभिः अयाजयन् ततो भगवान् रामः तेभ्यः विशुद्धविज्ञानंददौ ततः स्वपत्न्यासह अवभृथस्नातः ज्ञातिबंधुसुहृद्वृतः सन् स्वप्रभयाचंद्रइवशुशुभे एवंबलस्य असंख्यानिकर्माणिसंतितानियः सायंप्रातः स्मरेत् सः विष्णोः दयितोभवेत् ३४ इतिदशमे एकोनाशीतितमोऽध्यायः ७९ राजोवाच हेब्रह्मन् मुकुंदस्य अन्यानिवीर्याणिश्रोतुंइच्छामहे हेऋषे उत्तमश्लोकसत्कथाः श्रुत्वासारवित्कः विरमेत किंच याभगवद्गुणान् गृणीते सावाक् तत्कर्मकरौतौहस्तौ यत् श्रीहरिं स्मरेत् तत् मनः यः भगवत्कथाः शृणोतिसः कर्णः यत् भगवंतंनमेत् तच्छिरः यत् श्रीहरिं पश्यति तच्चक्षुः यानिविष्णोर्भक्तानांच पादोदकं भजंतितानि अंगानि सूतउवाच एवंपरीक्षितापृष्टः शुकः तंअब्रवीत् श्रीशुकउवा॰ हेराजन् कश्चिद्द्विजः विषयेषुविरक्तः सन् श्रीकृष्णस्यसखा आसीत् तस्यस्त्री क्षुत्क्षामासती एकदा पतिं अभिगम्यप्राह हेब्रह्मन् तवसाक्षात् श्रीपतिः ब्रह्मण्यः सखाअस्तितंत्वंउपैहि सः सीदतेतुभ्यं द्रविणंदास्यति सः अधुनाद्वारवत्यांआस्ते सः पादकमलंस्मरतः पुंसः आत्मानमपियच्छति किंपुनः अर्थकामान् यच्छतीतिवक्तव्यम् एवंभार्ययाप्रार्थितः विप्रः श्रीकृष्णदर्शनं अयमेवपरोलाभइतिसंचिंत्यगमनाय मतिंदधे हेकल्याणिगृहे किंचित् अस्तिचेत् दीयताम् ततः सास्त्रीचतुरोमुष्टीन् पृथुगणान् याचित्वावस्त्रखंडेनबध्वा भर्त्रे प्रादात् ततः सः तान् आदाय मह्यं कृष्णदर्शनं कथंस्यात् इतिचिंतयन् द्वारकांप्रययौ ततः सः त्रीणिगुल्मानि[१] तथातिस्रः प्रतोलीश्च[२] अतिक्रम्य अंधकवृष्णीनांगृहेषुमध्ये येहरेः षोडशसहस्रमहिषीणांगृहाः तेषुमध्ये श्रीमत् एकतमंगृहंविवेश तदा श्रीकृष्णः दूरात् तंविप्रंविलोक्यसहसाउत्थाय अभ्येत्यमुदा आलिंगितवान् ततः प्रियस्य

ओ॰ २ सैन्यस्थानानि ओ॰ २ देहल्यः



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

नमेव दृढीकृत्य श्रुतयः स्तुवंति येऋषिसंप्रदायमार्गेषु स्थूलदृष्टयः तेउदरालंबनं मणिपूरकस्थं ब्रह्म ध्यायंति आरुणयस्तु साक्षा
त्हृदयस्थं सूक्ष्ममेवउपासते ततोहृदयात् ब्रह्मरंध्रं प्रति तवोपलब्धिस्थानं सुषुम्नाख्यं उद्गतं यत्प्राप्य जनाः पुनः संसारे न पतंति
५ ननुईशस्यापि जीववत् उदराधिसंबंधे सति केन विशेषेण उपास्यत्वं इतीमां शंकां परिहरंत्यः श्रुतयः स्तुवंति हे ईश त्वया कृते
षु उच्चादिदेहेषु कारणतया विशन्निव वर्तमानः त्वं न्यूनाधिकभावेन अवभाससे अग्निरिव अतः एषु मिथ्याभूतदेहेषु सत्यं तव
स्वरूपं निर्मलधियः जानंति अतः अप्रच्युतैश्वर्यस्य तवैवोपास्यत्वमिति ६ अथ श्रुतयः जीवस्य भगवद्भावं वदंति स्वकर्मोपा-
र्जित नरादिदेहेषु भोक्तृत्वेन वर्तमानं पुरुषं त्वद्रूपं वदंति एवं जीवस्य तत्त्वं विशोध्य कवयः भवनिवर्तकं तेंऽघ्रिं सेवंते मर्त्यलोके इद
मेव उचितम् ७ अथ पुनश्च भक्तिमेव दृढीकरोति भो ईश्वर दुर्बोधस्य स्वरूपस्य ज्ञानार्थं आविष्कृतमूर्तेः तव चरितमहामृताब्धौ-
अवगाहेन गतश्रमाः येते मोक्षमपि नेच्छंति कुतोन्यत् एवं तावत् भक्तेराधिक्यं सूचितम् ८ किंच श्रुतयः ईश्वरे रतिं उपदिशंती
त्याह हे ईश त्वत्सेवौपयिकं इदं शरीरं स्वाधीनत्वेन वर्तमानमपि ये सख्यादिना त्वां न भजंति ते आत्महनः संतः संसारे भ्रमंति
९ अथ ध्यानम् अंगत्वेनोपदिशंतीत्याह हे प्रभो मुनयः प्राणान् जित्वा हृदि यत्तत्वं उपासते तत् अरयोपि तव स्मरणात्
स्त्रियोपि कामतः प्रापुः किंच वयं श्रुतयः अपरिछिन्नं त्वां पश्यंत्योपि कृपाविषयतया तैंस्तत्समा एवेति १० किंच ईश न त्वं दुर्ज्ञेयं व
दंत्यः भक्तिं उररीकृत्य स्तुवंतीत्याह हे भगवन् इह जगति पूर्वसिद्धं त्वां अर्वाचीनः को नु पुमान् जानाति यतः त्वत्तो ब्रह्मादयः उ
त्पन्नाः किंच यदा त्वं इदं संहृत्य शयीत तदा जीवानां ज्ञानसाधनम् स्थूलसूक्ष्मादि शरीरं च शास्त्रमपि नास्ति एवं तव स्वरूपज्ञा
नस्याशक्यत्वात् भक्तिरेव सुकरा ११ इतोपि ज्ञानं न सुशकं उपदिशतामपि भ्रमबाहुल्यादित्याहुः ये वैशेषिकादयः जगतः उ



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

दृष्ट्वाइदमब्रवीत् हेराजन् हेवृकोदर युवांतुल्यबलौस्तः यतः एकंबलाधिकं अपरंशिक्षयाधिकं अहंमन्येतस्मात् युवयोर्मध्ये एकतरस्य
जयः पराजयोवानदृश्यते अतोविफलःरणःविरमतु एवंउक्तौतौत द्वाक्यंनजगृहतुः तद्विष्टंमन्वानःरामःद्वारवतींययौ ततःउग्रसेनादीन्
संगम्यपुनर्नैमिषंअगात् ततःतंरामंऋषयःक्रतुभिःअयाजयन् ततोभगवान्रामःतेभ्यःविशुद्धविज्ञानंददौ ततःस्वपत्न्यासहअ
वभृथस्नातःज्ञानिबंधुसुहृद्वृतःसन् स्वप्रभयाचंद्रइवशुशुभे एवंबलस्यअसंख्यानिकर्माणिसंतितानियःसायंप्रातःस्मरेत् सःविष्णोः
दयितोभवेत् ३४ इतिदशमेएकोनाशीतितमोऽध्यायः७९ राजोवाच हेब्रह्मन् मुकुंदस्यअन्यानिवीर्याणिश्रोतुंइच्छामहे हेऋषे
उत्तमश्लोकसत्कथाःश्रुत्वासारवित्कःविरमेत किंच याभगवद्गुणान्गृणीतेसावाक् तत्कर्मकरौतौहस्तौ यत्श्रीहरिंस्मरेत् तत्मनः यः
भगवत्कथाःशृणोतिसःकर्णःयत् भगवंतंनमेत् तच्छिरःयत् श्रीहरिंपश्यति तच्चक्षुःयानिविष्णोर्भक्तानांच पादोदकंभजंतितानिअंगा
नि सूतउवाच एवंपरीक्षितापृष्टःशुकःतंअब्रवीत् श्रीशुकउवा॰ हेराजन्कश्चिद्द्विजःविषयेषुविरक्तःसन्श्रीकृष्णस्यसखा
आसीत् तस्यस्त्रीक्षुत्क्षामासती एकदापतिं अभिगम्यप्राह हेब्रह्मन् तवसाक्षात्श्रीपतिःब्रह्मण्यःसखाअस्तितंत्वंउपैहि सःसीदतेतु
भ्यंद्रविणंदास्यति सः अधुनाद्वारवत्यांआस्ते सःपादकमलंस्मरतःपुंसःआत्मानमपियच्छति किंपुनःअर्थकामान्यच्छतीतिवक्त
व्यम् एवंभार्ययाप्रार्थितःविप्रःश्रीकृष्णदर्शनंअयमेवपरोलाभइतिसंचिंत्यगमनायमतिंदधे हेकल्याणिगृहेकिंचित् अस्तिचेत्दीय
ताम् ततःसास्त्रीचतुरोमुष्टीन्पृथुगणान्याचित्वावस्त्रखंडेनबध्वाभर्त्रेप्रादात् ततःसःतान् आदायमह्यंकृष्णदर्शनंकथंस्यात् इति
चिंतयन् द्वारकांप्रययौ ततःसःत्रीणिगुल्मानि[१]तथातिस्रःप्रतोलीश्च[२]अतिक्रम्यअंधकवृष्णीनांगृहेषुमध्येयेहरेःषोडशसहस्रमहिषीणां २३
गृहाःतेषुमध्येश्रीमत् एकतमंगृहंविवेश तदाश्रीकृष्णःदूरात्तंविप्रंविलोक्यसहसाउत्थाय अभ्येत्यमुदाआलिंगितवान् ततःप्रियस्य

ओ॰२ सैन्यस्थानानि ओ॰२ देहल्यः

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

अंगसंगेन निर्वृतः कृष्णः नेत्राभ्यां अश्रूणि व्यमुंचत् ततः तं द्विजं पर्यंके उपवेश्य स्वयं तस्मै उपायनं दत्वा तस्य पादौ प्रक्षाल्य तदपः शिरसा
अग्रहीत् ततः चंदनादिभिः मित्रं अर्चयित्वा तांबूलं गांच दत्वा स्वागतमित्यब्रवीत् तदा रुक्मिणी तं मलिनं द्विजं चामरव्यजनाभ्यां पर्यचर-
त् ततः कृष्णेन प्रीत्या सत्कृतं अवधूतं दृष्ट्वा अंतःपुरजनः विस्मितोऽभूत् अहो अनेन किं पुण्यं कृतं यो सौ श्रीहरिणा पर्यंकस्थां श्रियं हित्वा
संमानितः आलिंगितश्च ततः तौ द्विजकृष्णौ परस्परं करौ गृहीत्वा गुरुकुले वसतोः आत्मनोः पूर्वाः कथाः कथयांचक्रतुः श्रीभगवानुवा
च हे ब्रह्मन् गुरुकुलात् समावृत्तेन त्वया सदृशी भार्या परिणीता न वा किंच तव चित्तं कामैर्विहतं न भवतीति मे विदितम् किंच हे विद्व
न् त्वं द्रव्यवस्त्रादिषु नैव अतिप्रीयसे विदुषस्तव एतत् युक्तम् किंच हे ब्रह्मन् कच्चित् आवयोः गुरुकुले वासं स्मरसि यतः गुरोः सका
शात् आत्मतत्वं ज्ञात्वा संसारस्य पारं अश्नुते किंच हे द्विज अहं गुरुशुश्रूषया यथा तुष्येयं तथा गृहस्थादिधर्मैः न किंच हे ब्रह्मन् एक-
दा गुरुदारैः काष्ठानयनार्थं चोदितानां नः वृत्तं स्मर्यते किमु तदा महारण्ये प्रविष्टानां सतां अकाले वातः वर्षंच अभूत् तावत् सूर्योपि अस्तंगतः
तदा तमसा दिशः आवृताः तदा नतोन्नतस्थानं न प्राज्ञायत तदा वयं महानिलांबुभिः तत्र पीडिताः दिशः अविंदतः अन्योन्यगृहीतहस्ताः धृत
काष्ठभाराः संतः परिबभ्रिम एतद्विदित्वा रवौ उदिते सति सांदीपिनिः गुरुः शिष्यान्वेषमाणः आतुरान् नः अपश्यत् हे पुत्रकाः अस्मदर्थे-
यूयं अतिदुःखिताः सच्छिष्यैः गुरुनिष्कृतं एतदेव कर्तव्यम् गुरौ देहार्पणमिति यत् हे द्विजश्रेष्ठाः वः मनोरथाः सत्याः संतु किंच छंदांसि
इहामुत्रच अगतसाराणि भवंतु एवंविधानि वृत्तानि त्वया स्मर्यंते किम् किंच गुरुप्रसादेनैव पुमान् पूर्णो भवति ब्राह्मण उवाच हे
देवदेव अस्माभिः किं असंपन्नं यतः येषां नः त्वया सह गुरौ वासः अभूत् किंच यस्य तव वेदाख्यं वपुः तस्य गुरौ वासः अत्यंतानुक
रणम् ४५ इति दशमे अशीतितमः ८० श्रीशुक उवाच हे राजन् सः कृष्णः द्विजमुख्येन सह इत्थं स्वगोष्ठीः

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

कुर्वन् स्मयमानः सन् द्विजं उवाच श्रीभगवानुवाच हे ब्रह्मन् त्वया गृहात् मत्यं उपायनं किं अनीतम् यतः भक्तैः प्रेम्णा
अण्वपि उपाहृतं मे भूर्यैव भवेत् किंच अभक्तोपहृतं भूर्यपि मम तोषाय योग्यं न भवति किंच पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रय-
च्छति तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ४ इत्युक्तोपि द्विजः लज्जया अवाङ्मुखः सन् तस्मै पृथुकप्रसृतिं न ददौ ततः सर्वभूतानां म-
नः साक्षी भगवान् तस्यागमनकारणं विज्ञाय अचिंतयत् अयं पुरा श्रीकामनया मां न भजत् इदानीं तु पत्न्याः प्रियचिकीर्षया मां प्राप्तः
अतः अस्मै देवदुर्लभाः संपदः दास्यामि इत्थं विचिंत्य भगवान् द्विजस्य वस्त्रखंडे बद्धान् पृथुकान् इदं किमिति स्वयं जहार हे सखे इदं
मम परमप्रीणनं उपनीतम् एते पृथुकतंदुलाः विश्वात्मानं तर्पयंति इति वदन् कृष्णः एकां मुष्टिं जग्ध्वा द्वितीयां जग्धुं आददे तावत् लक्ष्मीः
हस्तं जगृहे हे विश्वात्मन् सर्वसंपत्समृद्धये एतावता ऽलं ततः सः ब्राह्मणः तां रात्रिं अच्युतमंदिरे उषित्वा तत्र भुक्त्वा पीत्वा आत्मानं स्व-
र्गतं मेने ततः श्वोभूते रवौ उदिते सति श्रीकृष्णेन अभिवंदितः सः स्वालयं जगाम सः कृष्णात् धनं अलब्ध्वापि स्वयं न याचितवान्
किंतु श्रीकृष्णदर्शननिर्वृतः सन् स्वगृहं अगच्छत् निर्वृतिमेवाह अहो श्रीकृष्णस्य ब्रह्मण्यता अद्य मया दृष्टा यतः लक्ष्मीं उरसि बिभ्र-
ता भगवता दरिद्रतमोऽहं आश्लिष्टः अहो अहं पापीयान् क्व श्रीनिवासः क्व तथापि तेन बाहुभ्यां अहं आलिंगितः किंच स्वपर्यंके अहं निवासितः अपि
च वालव्यजनेन रुक्मिण्या वीजितः तथा देवेन पादसंवाहनादिशुश्रूषया पूजितः ततः स्वस्य द्रव्यादाने कारणं कल्पयति अधनः
अयं धनं प्राप्य मां न स्मरेत् इति हेतोः मां धनं भूरि नाददत् इति संचिंतयन् सन् द्विजः निजगृहांतिकं प्राप्तः कीदृशं गृहम् विमानैः स
र्वतो वृतम् विचित्रोपवनोद्यानैः वेष्टितम् तथा स्वलंकृतस्त्रीपुरुषैः जुष्टम् एवं भूतं गृहं दृष्ट्वा किमिदं कस्य वा स्थानं कथं तत् २४

श्लो· ७ अतः परं तु द्वितीयमुष्टिभक्षणेन मामाप्येतदधीनां कुर्वीत·

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

एवंरूपमभूत् इतितर्कयंतंतंनरानार्यश्चउपायनादिभिः आह्वावंतः तदापतिंआगतंश्रुत्वातत्पत्नीतूर्णंगृहात्निश्चक्राम ततःसाप
तिव्रताप्रेमोत्कंठाश्रुलोचनासतीपतिंमनसापरिषस्वजे तदादासीनांमध्येस्फुरंतींपत्नींवीक्ष्यप्रीतःसन् तयासहसर्वोपस्करयुतं
निजमंदरंप्रविष्टः ततःसःब्राह्मणःतत्रसर्वसंपदांसमृद्धीः विलोक्यस्थिरःसन्तर्कयामास दुर्भगस्यममसमृद्धिहेतुः यदूत्तमस्य
अवलोकःअन्योनैव किंच मेसखाभगवान् अब्रुवाणएव याचकायअसमक्षंददाति पर्जन्यवत् किंचस्वदत्तंबह्वपिअल्पंमन्य-
तेसुहृत्कृतंअल्पमपिबहुमन्यते अतएवमयाउपनीतंपृथुकैकमुष्टिंप्रीतियुतःसन् स्वयंप्रतिगृहीतवान् तस्यभगवतःसौहृदस
ख्यमैत्रीदास्यंममजन्मनिजन्मनिस्यात् तथातद्भक्तसंगश्च किंच अहोभगवान् धनिनांमदोद्भवंनिपातंपश्यन् भक्तायसंपदोरा
ज्यंविभूतीश्चनददाति ममतुभक्तस्य भावात् एवंजानम् अतःतद्भक्तिरेवस्यात् इत्थंबुध्यानिश्चित्यविषयाणांत्यागंअभ्यस्यन्
जाययासहविषयान्बुभुजे एवंसःविप्रःभक्तैःपराजितंभगवंतंदृष्ट्वातध्यानेनगताहंकारःसन्तद्धामलेभे एतत्पृथुकोपाख्यानंश्रु-
त्वाभगवतिलब्धभक्तिःसन् कर्मबंधान्मुच्यते ४१ इतिदशमेएकाशीतितमः ८१ श्रीशुकउवाच हेराजन् एकदाद्वारव
त्यांरामकृष्णयोः वसतोःसतोःसूर्यग्रहःआसीत् तंज्ञात्वामनुजाःपूर्वमेवस्यमंतपंचकंययुः यत्रपरशुरामः नृपाणांरुधिरौघेणमहा
ह्रदांश्चक्रे किंच कर्मणाअस्पृष्टोऽपिरामः यत्रलोकसंग्रहार्थंईजे तत्रभारत्याःप्रजाः वृष्णयश्चतथाअक्रूरवसुदेवाऽहुकादयःय
युः अनिरुद्धोद्वारकायांरक्षार्थंआस्ते ततःतेयादवाःचतुरंगसैन्यैः पथिव्यरोचंत ततःतेतत्रस्नात्वाउपोष्यब्राह्मणेभ्यःसालंकृताः
धेनूः ददुः ततःतेवृष्णयःरामह्रदेषुमुक्तिस्नानंकृत्वाकृष्णेनःभक्तिरस्त्वितिद्विजाग्र्येभ्यःस्वन्नंददुः ततःविप्रानुज्ञाताःतेवृष्णयः
स्वयंभुक्त्वावृक्षमूलेषुकामंविविशुः ततस्तेवृष्णयःतत्रागतान् सुहृत्संबंधिनोमत्स्योशीनरकौसल्यविदर्भकुरुसृंजयान् कांबो

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

जकैकयमद्रकुंतीन् आनर्तकेरलान् अन्यांश्च नृपान् नंदादीन् गोपान् गोपीश्च ददृशुः ततस्ते अन्योन्य संदर्शन हर्षरंहसा गाढं आलिं-
ग्य मुदं ययुः तथा स्त्रियश्च अन्योन्यं वीक्ष्य मुदिताः सत्यः अभिरेभिरे ततः ते यादवाः वृद्धान् अभिवाद्य यविष्ठैः अभिवादिताः संतः
कुशलं पृष्ट्वा मिथः कृष्णकथाश्चक्रुः ततः पृथा भ्रातृस्वस्रादीन् मुकुंदं च वीक्ष्य मिथः सप्रेमगोष्ठीभिः शोकान् जहौ कुंत्युवाच
हे भ्रातः अहं अपूर्णमनोरथं आत्मानं मन्ये यतः आपत्सु मद्वार्तां नानुस्मरथ किंच यस्य दैवं नानुकूलं तं सुहृदो नानुस्मरंति वसु-
देव उवाच हे अंब अस्मान् मासूयेथाः यतः कंसेन तापिताः वयं दिशं दिशं याताः संप्रत्येव पुनः दैवेन स्थानं प्राप्ताः श्रीशुक उवा-
च हे राजन् यदुभिरर्चिताः नृपाः कृष्णदर्शनेन निर्वृता आसन् ततः कौरवपांडवादयः राजानः कृष्णस्य श्रीनिकेतं वपुः वीक्ष्य वि-
स्मिताः बभूवुः ततः रामकृष्णाभ्यां पूजिताः ते राजानः वृष्णीन् मुदा प्रशशंसुः अहो भोजपते नृणां मध्ये यूयं सफलजन्मानः यतः अ-
सकृत् श्रीकृष्णं पश्यथ किंच यस्य श्रीकृष्णस्य कीर्तिः पादोदकं गंगा वाक्यरूपो वेदश्च विश्वं पुनाति किंच येषां वः गृहे स्वयं विष्णुः आ-
विर्भूतः सन् युष्मान् स्वर्गप्रदो बभूव श्रीशुक उवाच नंदः यत्र यदून् प्राप्तान् ज्ञात्वा गोपैर्वृतः सन् तद्दिदृक्षया स्वयं अगमत्
वृष्णयः तं नंदं दृष्ट्वा गाढं परिषस्वजिरे ततो वसुदेवः संप्रीतः सन् तान् वृष्णीन् परिष्वज्य कंसकृतान् क्लेशान् तथा गोकुले पुत्रन्यासं
च स्मरन् प्रेमविह्वलो बभूव ततः कृष्णरामौ पितरौ प्रति परिष्वज्य प्रेम्णा साश्रुकंठौ संतौ किंच नतो चतुः तदा यशोदानंदौ रामं कृ-
ष्णं च उत्संगासनं आरोप्य बाहुभ्यां आलिंग्य विरहशोकान् विजहतुः ततः रोहिणी देवकी च यशोदां परिष्वज्य तत्कृतां मैत्रीं स्मरंत्यौ
ऊचतुः हे यशोदे वां मैत्रीं का विस्मरेत् यतः हे देवि एतौ रामकृष्णौ युवयोः न्यस्तौ संतौ पोषणपालनादि प्राप्य ऊषतुः श्रीशुक उ-
वाच हे राजन् ततो गोप्यः चिरात् कृष्णं उपलभ्य दृष्टिषु पक्ष्मकृतं शपंत्यः सत्यः दृग्भिः तं हृदिकृत्य आलिंग्य तनाः सर्वाः तदात्म-

ओ॰ १ विधातारं॰



CC-0.Courtesy Shri K.S.Parihar Librarian.Government District Library Varanasi. Digitized by eGangotri

तां आपुः भगवानपि विविक्केताः उपलभ्य आश्लिष्य कुशलं पृष्ट्वा अब्रवीत् हे सख्यः यूयं नः स्मरथ किम् किंच अकृतज्ञा एते इति अ
स्मान् अवजानीत किं ओं मिति चेत् आह हे सख्यः भगवान् भूतानि युनक्ति वियुनक्ति च वायुः घनादिकं यथा किंच मयि भूतानां-
भक्तिः मोक्षाय कल्पते किंच भवतीनां मयि स्नेहः आसीत् एतद्दिष्ट्या हे अंगनाः अहं सर्व भूतानां आदिः अंतः अंतरं बहिश्च अतः ए
तत् भूत भौतिक रूपं भोग्यं भोक्तारमात्मानं च मयि आभातं पश्यत श्रीशुकउवाच एवं श्रीकृष्णेन शिक्षिताः ताः गोप्यः तमे
व प्रापुः आहुश्च हे भगवन् गेहं जुषामपि नः मनसि योगेश्वरैः हृदि विचिंत्यं ते पदारविंदं आविर्भवतु ४८ इति दशमे द्व्यशीतितमो
ध्यायः ८२ श्रीशुकउवाच हे राजन् ततो भगवान् युधिष्ठिरादीन् कुशलं अपृच्छत् एवं लोकनाथेन सत्कृतास्ते युधिष्ठिरादयः
ऊचुः हे प्रभो तव कीर्तिं कर्णपुटैः ये पिबंति तेषां अभद्रं कुतः हे भगवन् परमहंसगतिं त्वां नताः स्म श्रीशुकउवाच हे राजन् ए-
वं श्रीकृष्णं जनेषु स्तुवत्सु यादव कौरव स्त्रियः मिथः समेत्य गोविंद कथा अगृणन् ताः ते वर्णयामि शृणु द्रौपद्युवाच हे वैद
र्भि हे भद्रे हे जांबवति हे सत्ये हे सत्यभामे हे कालिंदि हे मित्रविंदे हे रोहिणि हे लक्ष्मणे हे कृष्णपत्न्यः भगवान् वः यथा उपयेमे तत् नः
ब्रूत रुक्मिण्युवाच हे कृष्णे चैद्याय मां संपादयितुं उद्यत कार्मुकेषु राजसु सत्सु तेषां मूर्ध्नि पदं दत्वा कृष्णः मां निन्ये तस्य चर
णः मम अर्चनाय अस्तु सत्यभामोवाच यः मे पित्रा लिसं दुर्यशः परिहर्तुं ऋक्षराजं जित्वा स्यमंतकं आनीय मत्पित्रे दत्तवा
न् ततः मत्पिता स्वापराधेन भीतः सन् श्रीकृष्णाय मां ददौ जांबवत्युवाच मत्पिता असुं श्रीकृष्णं निजनाथं राममिति अविज्ञा
य २७ दिनानि अमुना युध्यत् ततः असौ राम एवेति तं ज्ञात्वा पादौ प्रगृह्य मणिना सह मां तस्मै समर्पितवान् अतः अहं अमुष्य
दास्यस्मि कालिंद्युवाच स्वपाद स्पर्शनाशया तपश्चरंतीं मां ज्ञात्वा अर्जुनेन स उपेत्य यः पाणिं अग्रहीत् अहं तस्य-

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

गृहसंमार्जनकर्त्री मित्रविंदोवाच यः ममस्वयंवरे भूपान् मेध्मातृंश्च विजित्य मां स्वपुरं निन्ये तस्य चरणक्षालनकर्तृत्वं जन्मनि जन्मनि मेऽस्तु सत्योवाच ममपित्रा राजवीर्यपरीक्षार्थं संपादितान् वीरदुर्मदनाशकान् सप्तवृषभान् निगृह्य यः बबंध किंच पथि राजन्यान् निर्जित्य मां निन्ये तस्य मम दास्यं अस्तु भद्रोवाच हे द्रौपदि मे पिता श्रुतकीर्तिः मातुलेयाय कृष्णाय आहूय तच्चित्तां मां दत्तवान् तस्य पादस्पर्शः जन्मनि जन्मनि भूयात् लक्ष्मणोवाच हे राज्ञि नारदेन गीतं अच्युतजन्मकर्म श्रुत्वा मम चित्तं मुकुंदे आसीत् तदा मे पिता बृहत्सेनः एवं मम मतं ज्ञात्वा तत्र उपायं अकरोत् हे राज्ञि यथा तव स्वयंवरे पार्थेप्सया मत्स्यः कृतः तथा मत्स्यं कारितवान् अयं तु बहिः आच्छन्नो न किंतु स्तंभमूले निहितकलशजले केवलं दृश्यते अतः दृष्टिः अधः उपरि लक्ष्यं तस्मात् श्रीकृष्णं विना न कस्यापि भेद्यः तच्छ्रुत्वा भूपाः मत्पितुः पुरं आययुः ततः पित्रा पूजिताः ते सशरं चापं अदद्रुः तत्र केचित् आदाय व्यसृजन् केचित् सज्जं कर्तुं असमर्थाः के॰ ज्यां आकृष्य चापेन निहताः पेतुः अपरे मागधाद्याः सज्यं कृत्वा तदवस्थितिं नाविंदन् ततः पार्थः मत्स्यावस्थितिं ज्ञात्वा बाणं असृजत् सः बाणः तं ना छिनत् किंतु पस्पर्श एवं भग्नमानेषु राजन्येषु सत्सु भगवान् धनुः आदाय सज्यं कृत्वा तत्र बाणं संधाय जले सकृद्वीक्ष्य इषुणा मत्स्यं छित्वा अपातयत् तदा दिवि दुंदुभयो नेदुः देवाः पुष्पाणि मुमुचुः तदा अहं हस्ते रत्नमालां गृहीत्वा पद्भ्यां तद्रंगं प्रविश्य ततः परितः राज्ञः निरीक्ष्य मुरारेः अंसे मालां निदधे ततः दामृदंगादयो नेदुः नटादयो ननृतुः गायकाः जगुः हे द्रौपदि मया एवं भगवति वृते सति नृपाः न सेहिरे ततः मां रथं आरोप्य शार्ङ्गं उद्यम्य चतुर्भुजः हरिः आजौ तस्थौ तदा दारुकः रथं चोदयामास ततः केचन राजानः पथि प्रतिषेद्धुं पुरतो गत्वा पथि संयत्ता बभूवुः ते बाणौघैः छिन्नबाह्वंघ्रिग्रीवाः पेतुः एके रणं त्यक्त्वा दुद्रुवुः ततः कृष्णः स्वलंकृतां द्वारकां प्राविशत् तदा मे पिता सुहृदादीन् 

ओ॰ २ द्वाभ्यां मा आलिंग्य द्वाभ्यां धनुर्बाणौ गृहीत्वा॰

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

वस्त्रादिभिरपूजयत् श्रीकृष्णाय आयुधानिददौ इमाः अष्टौवयं आत्मारामस्य गृहदासिकाः बभूविम महिष्यऊचुः हेरा-
ज्ञि क्षितिजये भौमेन जितानां राज्ञां कन्याः नः रुद्धाः इति ज्ञात्वा कृष्णः भौमं हत्वा नः निर्मुच्य आप्तकामोपि उदावहत् हे साध्वि व
यं साम्राज्यादिन कामयामहे किंतु अस्य श्रीमत्पादरजः मूर्ध्ना वोढुं कामयामहे यतः गोपिकाः पुलिंद्यः गावः गोपाश्च महात्मनः
पादस्पर्शं वांछंति ४३ इतिदशमेत्र्यशीतितमः ८३ श्रीशुकउवाच हेराजन् ततः पृथा गांधारी द्रौपदी सुभद्रा तथा
राजपत्न्यः गोप्यश्च श्रीकृष्णे तासां स्नेहानुबंधं श्रुत्वा विस्मयं चक्रुः इतिस्त्रीभिः स्त्रीषु नृभिः नृषु संभाष्यमाणेषु सत्सु कृष्णरा
मदिदृक्षया मुनयः तत्र आययुः तेच व्यासः नारदः च्यवनः देवलः असितः शतानंदः भरद्वाजः गौतमः रामः वसिष्ठः गालवः भृगुः पु
लस्त्यः कश्यपः अत्रिः मार्कंडेयः बृहस्पतिः द्वितः त्रितः एकतः ब्रह्मपुत्राः अंगिराः अगस्त्यः याज्ञवल्क्यः वामदेवादयश्च एतान्
ऋषीन् दृष्ट्वा पांडवादयः रामकृष्णौ च उत्थाय प्रणेमुः ततः ते सर्वे रामकृष्णौ च तान् आनर्चुः ततः भगवान् तान् उवाच श्रीभग
वानुवाच अहो वयं सफलजन्मानः यतः योगेश्वरदर्शनं जातम् किंच नह्यं मयानि तीर्थानि न देवा मृच्छिलामयाः ते पुनंत्युरु
कालेन दर्शनादेव साधवः किंच अग्निसूर्यचंद्रतारकाभूजलखश्वासवागादयः देवाः उपासिताः संतः अघं रहंति न तु तन्मूलमज्ञा
नम् साधवस्तु क्षणमुहूर्तसेवया समूलं पापं घ्नंति श्रीशुकउवाच विप्राः कृष्णस्य वचः निशम्य तूष्णीं आसन् ततो मुनयः
चिरं विमृश्य जनसंग्रहमात्रमेतदिति जगद्गुरुं ऊचुः मुनयऊचुः हे कृष्ण यन्मायया वयं विमोहिताः सः त्वं अनीश्वरवत्
आचरसि अहो तव विचेष्टितं अतर्क्यं अथापि भक्तरक्षार्थं दुष्टनिग्रहाय च सत्वात्मकं रूपं बिभर्षि अतएव ब्रह्मकुलं सभाज
यसि अद्य नः जन्मसाफल्यं भगवते कृष्णाय तुभ्यं नमः हे ईश अमी भूपाः वृष्णयश्च ईश्वरं त्वां न विंदंति तस्य तवांघ्रिं वयं दृष्टाः स्म

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

अतोऽस्मान् अनुगृहाण श्रीशुकउवाच इतिकृष्णं अनुज्ञाप्य ऋषयः स्वाश्रमान् गंतुं मनोदधिरे तदावसुदेवः तान् उ
पव्रज्य प्रणम्य इदंबभाषे वसुदेवउवाच हे ऋषयः वः नमः येन कर्मणाकर्मणोनिरासोभवतितत् नः उच्यतां तदा
श्रीकृष्णं हित्वा अस्मान् पृच्छतीतिविस्मितान् मुनीन् नारदः आह हेविप्राः कृष्णं अर्भकं मत्वावसुदेवः आत्मनः श्रेयः पृच्छतीति-
नचित्रम् यतः मर्त्यानांसन्निकर्षः अनादरेकारणंभवति यथागंगांहित्वातत्रत्यः शुद्ध्यै अन्यांभः याति अथमुनयः वसुदेवंऊचुः
हेवसुदेव कर्मणाकर्मनिर्हारः एषः निरूपितः सएवाहुः मखैः विष्णुंश्रद्धयायजेत् यज्ञदानैः वित्तेषणांत्यजेत् गृहोचित भोगैः दार
सुतेषणां॰ क्षयानुसंधानेन स्वर्गादिलोकेषणां॰ एवंत्यक्तैषणाः धीराः संतः वनंययुः किंच अयंद्विजः त्रिभिः ऋणैः सहजातोस्ति अ
तः यज्ञाध्ययनपुत्रैः तानिऋणानि अनपाकृत्य देहंत्यजन् अधः पपेत् त्वंतु ऋषिपित्रोः ऋणाभ्यांमुक्तोऽसि अथयज्ञैः देवऋणंउन्मु
च्य गृहात् प्रव्रज हे वसुदेव अयंक्रमः अविशुद्धचित्तानां त्वंतु कृतार्थएवस्यात् भगवान् युवयोः पुत्रतांगतः श्रीशुकउवाच
एवंतेषांवचनंश्रुत्वा वसुदेवः तान् प्रणम्य ऋत्विजोवव्रे ततः ते ऋषयः तस्मिन् क्षेत्रे मखैः वसुदेवं अयाजयन् एवंयज्ञदीक्षायांप्रवृ-
त्तायां वृष्णायः राजानः महिष्यश्च वस्तुपाणयः सत्यः यज्ञशालांउपाजग्मुः तदामृदंगादयोनेदुः नटादयोननृतुः सूतादयः तुष्टुवुः सधवाः
गंधर्व्यः जगुः ततः ऋत्विजः सपत्नीकं वसुदेवं अभ्यषिंचन् तदावसुदेवः स्त्रीभिः सह शुशुभे तथाससदस्याः ऋत्विजः विरेजुः तथा
रामकृष्णौ स्वपुत्रदारैः रेजतुः अथवसुदेवः ऋत्विग्भ्यो दक्षिणाः गोभूकन्याश्चददौ ततः पत्नीसंयाजौ चरित्वा यजमानपुरःस
राः सर्वे रामह्रदे स्नानंचक्रुः ततोवसुदेवः अलंकारवासांसिबंदिभ्यः अदात् ततः आश्वभ्यः अन्नेन संतर्प्य ततः सुतदारसहितान् बंधू २७
न् विदर्भादीन् राज्ञः सदस्यर्त्विक् सुरगणान् नृभूतपितृचारणान् अपूजयत् ततस्ते श्रीकृष्णं अनुज्ञाप्य प्रययुः ततः धृतराष्ट्र विदुरौ यु

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

धिष्ठिरभीमार्जुनाः भीष्मः द्रोणः नकुलसहदेवौनारदः व्यासः सुहृदादयः अन्येजना श्चयदून् परिष्वज्य स्वदेशान् ययुः नंदस्तु कृष्ण-
रामोग्रसेनाद्यैः अर्चितः सन् गोपालैः सहन्यवात्सीत् तदावसुदेवः नंदं आह हे भ्रातः इमं स्नेहपाशं दुस्त्यजं मन्ये हे भ्रातः वयं प्राक् असा
मर्थ्यात् कुशलं नाचराम अधुनातु श्रीमदांधाक्षाः वः न पश्याम अतः श्रेयस्कामस्य पुंसः राज्यश्रीः माभूत् श्रीशुकउवाच
एवं वसुदेवः नंदकृतां मैत्रीं स्मरन् रुरोद ततः नंदः रामकृष्णयोः प्रेम्णा त्रीन् मासान् तत्रावसत् ततः वसुदेवोग्रसेन कृष्णोद्धव बलादि
भिः दत्तं पारिबर्हं आदाय नंदः गोपाः गोप्यश्च गोविंदचरणांबुजे क्षिप्तं मनः पुनर्हर्तुं अनीशाः संतः मथुरां ययुः ततो वृष्णयः आसन्नां
प्रावृषं वीक्ष्य पुनर्द्वारकां एत्य तीर्थयात्रायांजातं यज्ञोत्सवं सुहृत्संदर्शनादिकं च जने भ्यः कथयांचक्रुः ८१ इतिदशमे चतुरशीति
तमः ८४ श्रीशुकउवाच हे राजन् एकदा वसुदेवः पुत्रयोः प्रभावसूचकं ऋषिवचः श्रुत्वा तद्वीर्यजातविश्वासः सन् प्राप्तौ
रामकृष्णौ सत्कृत्य अभ्यभाषत हे कृष्ण हे राम युवां प्रधानपुरुषेश्वरौ जाने किंच एतद्विश्वं तं बिभर्षि किंच प्राणादीनां याः शक्तयः
चंद्रस्य कांतिः अग्नेस्तेजः अर्कस्य प्रभा ऋक्ष विद्युतां स्फुरणं भूभृतां स्थैर्यम् भूमेः गंधः अपां रसः वायोः गतिः एषा तवैव शक्तिः किं
च दिशां अवकाशः त्वमेव इंद्रियाणां विषयप्रकाशनशक्तिः त्वं बुद्धेः व्यवसायशक्तिः त्वं भूतेंद्रियदेवतानां कारणं त्रिविधोऽहंका-
रस्त्वं किंच हे विभो एते त्रयो गुणाः तद्वृत्तयश्च परे ब्रह्मणि त्वयि मायया कल्पिताः संति अतः वस्तुतस्ते त्वयि न संति एवं तव सूक्ष्मां
गतिं अबुध्वा देहाभिमानेन कृतैः कर्मभिः संसरंति किंच अयं जनः यदृच्छया मनुष्यदेहं प्राप्य यः स्वार्थे प्रमत्तः तस्य वयो वृथा गतम्
किंच असौ अहं मम एते एवं इदं जगत् त्वं स्नेहपाशैः बध्नासि किंच युवां मम सुतौ न किंतु साक्षात्प्रधानपुरुषेश्वरौ स्तः अतः ते पादार
विंदं शरणं प्राप्तोऽस्मि अतः परं देहे आत्मबुद्धिः त्वयि पुत्रबुद्धिश्च मा स्तु श्रीशुकउवाच हे राजन् श्रीकृष्णः इत्थं पितुर्वा-

[illegible]

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

स्वयंश्रुत्वा तं प्राह श्रीभगवानुवाच हे तात नः पुत्रान् उद्दिश्य त्वया तत्त्वग्रामः निरूपितः एतत् ते वचः युक्तार्थं मन्यामहे हे पितः अहं असौ रामः एते सर्वे एवं चराचरं विश्वं ब्रह्मत्वेन अन्वेषणीयम् श्रीशुक उवाच एवमुक्तः वसुदेवः विनष्टनानाधीः सन् तूष्णीं अभूत् अथ देवकी आत्मपुत्राभ्यां रामकृष्णाभ्यां गुरोः पुत्रं आनीतं श्रुत्वा कंसविहिंसितान् स्वपुत्रान् स्मरंती सती तौ आह देवक्युवाच हे राम हे कृष्ण वां आदिपुरुषौ अहं जाने किंच युवां भूमेः भारायमाणानां राज्ञां निधनार्थं मयि अवतीर्णौ अतः युवां अहं शरणं गतास्मि किंच गुरुणा मृतसुतादाने नोदितौ संतौ पितृस्थानात् तत्सुतं आनीतवंतौ तथा मे कामं कुरुतं कंसहतान् पुत्रान् द्रष्टुं इच्छामि श्रीशुक उवाच एवं मात्रा नोदितौ रामकृष्णौ सुतलं गतौ संतौ बलेः सद्म विविशतुः तदा बलिः तौ उपलभ्य सद्यः उत्थाय सान्वयः ननाम ततः तयोः वरासनं दत्वा तत्र निविष्टयोः तयोः पादौ प्रक्षाल्य तज्जलं सकुटुंबः दधार ततः तौ प्रति वस्त्राभरणादिभिः पूजयामास ततः बलिः भगवत्पदांबुजं बिभ्रत् सन् गद्गदाक्षरं उवाच बलिरुवाच नमोनंताय बृहते नमः कृष्णाय वेधसे सांख्ययोगवितानाय ब्रह्मणे परमात्मने ३९ किंच रजस्तमःस्वभावानां नः तव दर्शनं दुर्लभम् किंच दैत्यदानवादयो त्वयि नित्यं बद्धवैराः ते नादृशाः वयं अन्येच यथा त्वदात्मतां प्राप्ताः तथा देवादयः सत्वाविष्टा अपि त्वदात्मतां न प्राप्ताः हे योगेश्वर योगेशाः तव योगमायां न विंदंति वयं तु कुतः हे भगवन् नः शिक्षय निष्पापान् कुरु श्रीभगवानुवाच हे बले स्वायंभुवमन्वंतरे मरीचेः सकाशात् ऊर्णायां षट्पुत्राः आसन् ते सुतां यभितुमुद्यतं ब्रह्माणं जहसुः ततस्तेन तेन पापेन आसुरीं योनिं प्राप्ताः संतः हिरण्यकशिपोः सकाशाज्जाताः तेन स्मात् योगमायया नीताः संतः देवक्याः उदरे जाताः ते च कंसेन विहिंसिताः अतः सा तान् शोचति ते इमे त्वदंतिके अध्यासते अतः इतः मातृशोकापनुत्तये एतान् प्रणेष्यामः ते च स्मरः १ उद्गीथः २ परिष्वंगः ३ पतंगः ४ क्षुद्रभृत् ५ घृणी ६ इमे
ओ॰ ५ यमसदनात्



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

मत्प्रसादेनसद्गतिंयास्यंति इत्युक्त्वातान् आदायपुनः द्वारवतींएत्यमातुः पुत्रान् अयच्छताम् ततोदेवकीतान् पुत्रान् दृष्ट्वा अं-
कंओरोप्यपरिष्वज्यप्रीतासतीस्तनंअपाययत् ततस्तेतस्याः अमृतमयंपयःपीत्वानारायणांगस्पर्शेनदेवालब्धज्ञानाः संतः गो
विंदंदेवकींवसुदेवंरामंचनमस्कृत्यसर्वभूतानांपश्यतांसतांदेवलोकंययुः तत् दृष्ट्वादेवकीकृष्णस्यमायांमेने हेराजन् एवंविधा
निवीर्याणिअनंतस्यअनंतानिसंति सूतउवाच इदंव्यासपुत्रेणवर्णितंमुरारेः चरित्रंयःशृणोतिश्रावयेद्वासः भगवतिकृत
चित्तः सन् तद्धामयाति ५९ इतिदशमेपंचाशीतितमः ८५ राजोवाच हेब्रह्मन् अर्जुनःरामकृष्णयोःस्वसारंसुभ
द्रांउपयेमे एतद्वेदितुंइच्छामः श्रीशुकउवा० अर्जुनःतीर्थयात्रायांपृथ्वींपर्यटन् प्रभासंगतः तत्ररामः सुभद्रांदुर्योधनाय
दास्यति अपरेवसुदेवादयोनेति अशृणोत् तांसुभद्रांइच्छुः अर्जुनःत्रिदंडीयतिर्भूत्वाद्वारकांअगात् तत्रद्वारकायांवार्षिकान् मा
सान् उवास ततःएकदाअजानतारामेणतंयतिंगृहंआनीयश्रद्धयापरिविष्टंभैक्ष्यंअर्जुनःबुभुजे तदासोऽर्जुनः तत्रमहतींकन्यां
वीक्ष्यतस्यांभावक्षुब्धंमनोदधे सापितंवीक्ष्यहसंतीसतीतंचकमे ततोऽर्जुनः तांहर्तुं अवसरंप्रेप्सुः कामेनभ्रमच्चित्तःसन् शं-
नलेभे ततः एकदादेवयात्रायांरथस्थांतां अर्जुनःपित्रोः कृष्णस्यचानुमतेनरथस्थः सन् धनुरादाय आवरणंकुर्वतोभटान्
विद्राव्यस्वभागंसिंहइवजहार तच्छ्रुत्वाक्षुभितोरामः कृष्णेनगृहीतपादः अन्वशाम्यत ततोबलःवरवध्वोः महाधनोपस्करे-
भरथाश्वनरयोषितःपारिबर्हाणिप्राहिणोत् श्रीशुकउवाच हेराजन् श्रीकृष्णस्यसरवाश्रुतदेवइतिविप्रःआसीत् सः
गृहस्थाश्रमीशांतःसन् मिथिलायांउवास सःदैवात् लब्धेनसंतुष्टःसन् यथोचिताःक्रियाःचक्रे तथाबहुलाश्वइतिश्रुतः तद्भू-
पालःआसीत् एतौउभावपि अच्युतप्रियौ अतःतयोःप्रसन्नोभगवान् रथंआरुह्यमुनिभिःसहविदेहान् प्रययौतेचऋषयः नार

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

दः वामदेवः अत्रिः व्यासः भार्गवरामः शुकः असितः अरुणिः बृहस्पतिः कण्वः मैत्रेयः च्यवनादयः एवमादिमुनिभिः सह प्राप्तं श्रीकृ
ष्णं श्रुत्वा पौराः जानपदाः सार्घहस्ताः उपतस्थुः ततः आनर्तादिदेशवर्त्तिन्यो नृनार्यः दृग्भिः तन्मुखकमलं पपुः सः कृष्णो ऽपि तेभ्यः
अभयं यच्छन् तैः गीतं स्वयशः शृण्वन् विदेहान् ययौ ततः ते पौरजानपदाः प्राप्तं अच्युतं आकर्ण्य प्रत्युज्जग्मुः ततः ते उत्तमश्लो
कं दृष्ट्वा कृष्णं ऋषींश्च शिरोभिः प्रणेमुः तथा मैथिलश्रुतदेवौ स्वानुग्रहाय प्राप्तं कृष्णं मत्वा तस्य पादयोः पेततुः ततः मैथिलः श्रुत
देवश्च युगपत् द्विजैः सह कृष्णं आतिथ्येन निमंत्रयेताम् ततः भगवान् तत् अंगीकृत्य द्वयोः प्रियचिकीर्षया उभाभ्यां अलक्षितः
सन् उभयोर्गृहं प्राविशत् ततो जनकः गृहागतान् तान् सह कृष्णान् मुनीन् नत्वा तदंघ्रीन् प्रक्षाल्य तदपः सकुटुंबः मूर्ध्नावहन् गंध
माल्यादिभिः तान् संपूज्य अंकगतौ पादौ संमर्दयन् उवाच राजोवाच हे भगवन् त्वं भूतानां आत्मासि अतः त्वच्चरणां
भोजं को नु पुमान् विसृजेत् यः भगवान् यदुवंशे अवतीर्य यशः वितेने तस्मै कृष्णाय तुभ्यं नमः किंच हे भूमन् मुनिभिः सह कति
चिद्दिनानि नः गृहान् उषित्वा पादरजसा निमेः कुलं पुनीहि इति राज्ञा उपामंत्रितः भगवान् पौराणां कल्याणं कुर्वन् उवास तथा श्रुत
देवोपि स्वगृहान् मुनिभिः सह प्राप्तं अच्युतं नत्वा संहृष्टः सन् वासो धुन्वन् ननर्त ततः तान् तृणपीठादिषु उपवेश्य तदंघ्रीन् प्रक्षा-
ल्य तदंभसा आत्मानं स्वगृहान्वयं स्नापयांचक्रे ततः तान् संपूज्य तेषां समीपे सभार्यः उपविष्टः सन् उवाच हे भगवन् अस्मान् अ
द्यैव दर्शनं प्राप्तः इति न किंतु यदा शक्तिभिः इदं विश्वं सृष्ट्वा तस्मिन् स्वसत्तया प्रविष्टः तदैव प्राप्तोसि किंच त्वं हृदिस्थोपि कर्मविक्षि
प्तचेतसां अतिदूरस्थोसि सः त्वं नः भृत्यान् शाधि श्रीशुक उवा॰ हे राजन् भगवान् तच्छ्रुत्वा पाणिना पाणिं गृहीत्वा आह श्री
भगवानुवा॰ हे ब्रह्मन् ते अनुग्रहाय प्राप्तान् अमून् मुनीन् विद्धि हे विप्र देवादयः कालेन पुनंति एते तु सद्यः किंच ब्राह्मणात् अन्यद्रूपं



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

मेप्रियंन तस्मात् एतान् ब्रह्मर्षीन् मच्छ्रद्धया अर्चय तेनाहं अर्चितोस्मि श्रीशुकउवाच इत्थंप्रभुणा आदिष्टः श्रुतदेवःस
कृष्णान्द्विजान् आराध्यश्रुतदेवः मैथिलश्च सद्गतिं आप हे राजन् भगवान् एवंतयोः सन्मार्गंउपदिश्य द्वारकांअगात् ५९ इति
दशमे षडशीतितमः ८६ परीक्षिदुवाच पूर्वाध्यायांते भगवान् स्वभक्तयोः स्वतःप्रमाणभूतवेदानांब्रह्मपरत्वंउपदिश्य अगा
त् इत्युक्तंतत्र वेदानांब्रह्मपरत्वंअघटमानंमन्वानः राजापृच्छति परीक्षिदुवाच हेब्रह्मन् अनिर्देश्येनिर्गुणेसदसतःपरेब्रह्म
णिगुणैर्वर्तमानाः श्रुतयः कथंचरंति श्रीशुकउवा॰ हेराजन् प्रभुः जीवानांचतुर्विधपुरुषार्थसिद्ध्येबुद्धींद्रियमनःप्राणान्
ससर्ज अयमभिप्रायः सगुणमेवईश्वरंगुणैः अनभिभूतंसर्वज्ञंसर्वेश्वरंसर्वोपास्यंसच्चिदानंदंभगवंतंश्रुतयः प्रतिपादयंति
एवंचसाक्षाद्रुपाधिनिषेधेनश्रुतीनांनिर्गुणेएवपर्यवसानम् अत्रच अनादिशिष्टपरंपरागतत्वान्नसंदेहोयुक्तइत्याह साएषाउपनि
षत् ब्रह्मपराअस्ति एतांयःश्रद्धयाधारयेत् सःपरंपदंप्राप्नुयात् अत्रार्थेइतिहासमाह हेराजन् अत्रतेनारायणनारदसंवादरूपंइति
हासंवर्णयिष्यामि एकदानारदः लोकान् पर्यटन् ऋषिंनारायणंद्रष्टुंबदरिकाश्रमंययौ यःअस्मिन् भारतवर्षेनृणांस्वस्तये आकल्पा
त् तपःआस्थितः तत्रगत्वाऋषिभिःपरीतंस्थितंनारायणंइदमेवपप्रच्छ तत्रनारायणःऋषीणांशृण्वतांसतांयःपूर्वंसनकादीनांज
नलोकवासिनांब्रह्मवादो॰भूत् तंनारदायआह श्रीनारायणउवा॰ हेनारदपुराजनलोकेतत्रस्थानांसनकादीनांब्रह्मसत्रंअ
भूत् तदात्वयिअनिरुद्धंईशंद्रष्टुंश्वेतद्वीपंगतेसतिसब्रह्मवादःप्रवृत्तः तत्रहायमभूत्प्रश्नः त्वंमांयमनुपृच्छसि तत्रसर्वेसन-
कायाः श्रुततपआदिभिस्तुल्याअपिएकंप्रवक्तारंकृत्वा अन्येपप्रच्छुः सनंदनउवाच हेऋषयःइदंस्वसृष्टंप्रलयेसंहृ
त्यशक्तिभिःसहशयानंईश्वरंप्रलयांतेप्रथमनिःश्वासभूताःश्रुतयःतत्प्रतिपादकवाक्यैःप्रबोधयामासुः यथाशयानंनृपंबंदि-

१०

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

नः उषांस एत्यनेत्सराक्रमैः बोधयंतितद्वत् श्रुतयऊचुः हेअजितउत्कर्षं आविष्कुरु केन व्यापारेण सर्वजीवानां आनंदाद्यावर
णाय गृहीतगुणां अविद्यांनाशाय यतःत्वंप्रास सम स्तैश्वर्योसि ननुजीवाएवतांकिंनहन्युःअतआह तेषांत्वमेवांतर्यामीसर्वशक्त्यु
द्बोधकः अतोनतेस्वतंत्राः ननुअहमेव अविद्याहंतेत्यत्रकिंप्रमाणमितिचेत् तर्हिअहमेवप्रमाणंननुएवंभूते मयिकथंवेदप्रवृत्तिःत
त्राह कदाचित् सृष्ट्यादिसमये माययाक्रीडंतंत्वांवेदः प्रतिपादयति १ ननुश्रुतिभिः इंद्राग्न्यादयः प्रतिपाद्यंते कथंमामेवेत्युच्यंते
तत्राह हेईश एतत् उपलब्धं इंद्रादिसर्वंब्रह्मत्वमेवेति अवशेषतयाजानंति कुतः यतः सर्वस्यउत्पत्तिलययोस्त्वः तर्हिकिंब्रह्मणःवि
कारित्वंनविवर्ताधिष्ठानत्वेनअविकारात् यथाघटादेःउत्पत्तिलयौमृदितद्वत् अतोमंत्राः त्वय्येवमनोवचनयोः तात्पर्याभिधानेवृत
वंतः अत्रदृष्टांतः यथानृणांकुत्रापिक्षिप्तानिपदानिभुवि अदत्तानिन भवंति तथायत्किमपिविकारजातंवदंतोवेदाःपरमार्थभूतंत्वा
मेवप्रतिपादयंति २ किंच हेत्रिगुणमायामृगीनर्तकविवेकिनः तवसर्वजनपापनाशहेतुं कीर्तिसुधाब्धिंनिषेव्यपापानिजहुः यदा-
त्वत्कथामात्रेण पापत्यागः तदाकिंवक्तव्यं येतवअखंडानंदानुभवंस्वरूपंसेवंते तेदुःखानित्यजंतीति ३ अथपूर्वोक्तोभयविधभ
जनहीनान्निंदंति हेईशनराः यदितेभक्ताःभवंति तर्हिसफलजीविनाःस्युःअन्यथाभस्त्राइवव्यथाश्वासाः ननुतेषांकामादिफल
मस्त्येवनेत्याह यतःमहदादयः यस्यानुप्रवेशेन वीर्यंप्राप्य इदंसमष्टिव्यष्टिरूपंसृष्टवंतः तत्रपंचकोशान् अन्नमयादीन्प्रविश्य
तत्तदाकारःसन् यःचेतयतेसः पुरुषविधः त्वम् ननुचिह्नस्य कथंतत्तदाकारतातत्राह एष्वन्नमयादिषुतवअन्वयात् एवंतर्हि-
सत्यत्वमसंगत्वंकथंतत्राह अन्नमयादिषुयश्चरमः पुच्छत्वेनोक्तःसत्वम् तथापिअसंगत्वहानिरेवतत्राह स्थूलसूक्ष्मान्नम- ३०
यादेः व्यतिरिक्तंतत् साक्षिभूतंअबाध्यंतत्त्वम् तर्हिकिमर्थंतेष्वन्वयउक्तः शाखाचंद्रवत् स्वरूपलक्षणार्थम् ४ अथभज

ओ॰३ पुरुषस्य अन्नमयादेः विधेवविधा आकारोयस्यसः

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

नमेव दृढीकृत्य श्रुतयः स्तुवंति येऽऋषिसंप्रदायमार्गेषु स्थूलदृष्टयः ते उदरालंबनं मणिपूरकस्थं ब्रह्म ध्यायंति आरुणयस्तु साक्षा
त् हृदयस्थं सूक्ष्ममेव उपासते ततो हृदयात् ब्रह्मरंध्रं प्रति तवोपलब्धिस्थानं सुषुम्नाख्यं उद्गतं यत्प्राप्य जनाः पुनः संसारे न पतंति
५ ननु ईशस्यापि जीववत् उदराधिसंबंधे सति केन विशेषेण उपास्यत्वं इतीमां शंकां परिहरंत्यः श्रुतयः स्तुवंति हे ईश त्वया कृते
षु उच्चादिदेहेषु कारणतया विशन्निव वर्तमानः त्वं न्यूनाधिकभावेन अवभाससे अग्निरिव अतः एषु मिथ्याभूतदेहेषु सत्यं तव
स्वरूपं निर्मलधियः जानंति अतः अप्रच्युतैश्वर्यस्य तवैवोपास्यत्वमिति ६ अथ श्रुतयः जीवस्य भगवद्भावं वदंति स्वकर्मोपा-
र्जित नरादिदेहेषु भोक्तृत्वेन वर्तमानं पुरुषं त्वद्रूपं वदंति एवं जीवस्य तत्त्वं विशोध्य कवयः भवनिवर्तकं तेंऽघ्रिं सेवंते मर्त्यलोके इद
मेव उचितम् ७ अथ पुनश्च भक्तिमेव दृढीकरोति भो ईश्वर दुर्बोधस्य स्वरूपस्य ज्ञानार्थं आविष्कृतमूर्तेः तव चरितमहामृताब्धौ-
अवगाहेन गतश्रमाः ये ते मोक्षमपि नेच्छंति कुतोन्यत् एवं तावत् भक्तेराधिक्यं सूचितम् ८ किंच श्रुतयः ईश्वरे रतिं उपदिशंती
त्याह हे ईश त्वत्सेवौपयिकं इदं शरीरं स्वाधीनत्वेन वर्तमानमपि ये सख्यादिना त्वां न भजंति ते आत्महनः संतः संसारे भ्रमंति
९ अथ ध्यानम् अंगत्वेनोपदिशंतीत्याह हे प्रभो मुनयः प्राणादीन् जित्वा हृदि यत्तत्त्वं उपासते तत् अरयोपि तव स्मरणात्
स्त्रियोपि कामतः प्रापुः किंच वयं श्रुतयः अपरिछिन्नं त्वां पश्यंत्योपि कृपाविषयतया तैस्तत्समा एवेति १० किंच ईश तत्त्वं दुर्ज्ञेयं व
दंत्यः भक्तिं उररीकृत्य स्तुवंतीत्याह हे भगवन् इह जगति पूर्वसिद्धं त्वां अर्वाचीनः कोनु पुमान् जानाति यतः त्वत्तो ब्रह्मादयः उ
त्पन्नाः किंच यदा त्वं इदं संहृत्य शयीत तदा जीवानां ज्ञानसाधनम् स्थूलसूक्ष्मादि शरीरं च शास्त्रमपि नास्ति एवं तव स्वरूपज्ञा
नस्याशक्यत्वात् भक्तिरेव सुकरा ११ इतोपि ज्ञानं न सुशकं उपदिशतामपि भ्रमबाहुल्यादित्याहुः ये वैशेषिकादयः जगतः उ



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

 

सत्तिं वदंति येच पातंजलादयः तेब्रह्मत्वस्योत्पत्तिं वदंति एवमादिवादिनः यद्यदुपदिशंति तत् भ्रांत्यैव नतत्वदृष्ट्या कुतः एकमेवाद्वितीयं ब्रह्मेत्यादिश्रुतिविरोधात् ननु पुरुषस्यत्रिगुणमयत्वेइदं संगच्छेत तत्तुनेत्याह त्रिगुणमयः पुमानिति यो भेदः सः त्वद्विषयाज्ञान विजृंभितः किंच ज्ञानघनेत्वयि अबोधोपि नसंभवति १२ ननु यद्यसन्नोत्पद्यते त्रिगुणमयः पुरुषोन भवति तर्हिइदंप्रपंचजातं पुरुषश्च पृथक् नास्तीत्युक्तं स्यात् तर्हि कथं तयोः सत्वप्रतीतिरत आह इदं मनोमात्रविलसितं गुणात्मकं प्रपंचजातं सदिव भाति कथं अधिष्ठानसत्तया सत्यवत्प्रतीयते किंच पुरुषस्यापि पृथक् सत्वप्रतीतिः मनोमात्रविलसितैव ननु आत्मविदामपि विश्वं सदेव स्फुरति कथं मिथ्येत्यत आह आत्मविदस्तु इदं विश्वं आत्मकार्यत्वात् तदेव तत् इतिजानंति नभिन्नम् अत्र दृष्टांतः यथा कनकार्थिनः स्वर्णविकारं कुंडलादिकं तदात्मतयैव गृण्हंति अतः इदं सर्वं आत्मतयैव गृण्हंति अतः इदं सर्वं आत्मतयैव निश्चितम् १३ भक्त्यातु ईश्वरज्ञानं सुकरमेवेत्याह हेईश त्वां सर्वभूतावासतया येसेवंते त एवमुच्यंते एवंभूताः भक्ताः आत्मानं अन्यानपि पवित्रयंति येऽभक्ताः तानृ त्वं पशूनिव बध्नासि १४ ननु ईश्वरस्य सर्वभूतावासत्वात् कर्तृत्वादि प्राप्ते अतः जीवेश्वरयोः तुल्यत्वात् कथं सेव्यसेवकत्वमिथ्या शंकां हरंत्यः श्रुतयः स्तुवंति हेईश त्वं इंद्रियहीनोपि सर्वेंद्रियशक्तिधरोसि अतस्त्वत्पूजां ब्रह्मादयः कुर्वंति तथा मनुष्यैर्दत्तम् बलिं स्वयं भक्षयंति यथा मांडलिकाः नृपाः सार्वभौमाय बलिं वहंति तद्वत् एवंच सर्वे देवादयः त्वत्कर्मणि युक्ताः संतः त्वदाज्ञापालनमेव कुर्वंति १५ किंच हे नित्यमुक्त यदा तव मायया क्रीडा भवति तदा सर्वे जीवाः स्युः ननु मयि लीनानां जीवानां कथं जन्म स्यात् तत्राह त्वदीक्षयैव आविर्भूतकर्मभिः संयुज्य उत्पद्यंते ननु किंनिमित्तोत्थानेन मदिच्छयैव भवंतु नत्वयि वैषम्याभावादित्याह तव समस्य स्वीयः परश्च नास्ति १६ किंच हे ध्रुव जीवाः अनंताः नित्याः सर्वगताश्च यदि स्युः तर्हि तेषां समत्वात् शास्यता नघट



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

ते इतरथातुघटेत कथं यदुपाधितः यज्जीवाख्यं विकारप्रायं जातं ननु स्वविकारस्य नियामकं भवेत् किंतनु जानीम इति वदतां-
अविज्ञानप्रायम् नजानीम इति वदतां ज्ञातप्रायम् एवं भूतं किमपि समं नियंतृ भवेत् १७ अथ जीवानां उपाधिजन्मनैव जन्मोच्यते न
स्वतः अघटनादित्याह अजयोः प्रकृतिपुरुषयोः जीवरूपेणोद्भवः न घटते उभयोः परस्पराध्यासेन जीवाः जायंते यथा जलबुद्बुदाः के
वलेन जलेन अनिलेन वा न भवंति किंतु मिलिताभ्यां तद्वत् एवं भूताः जीवाः त्वयि अनेकप्रकार कार्योपाधिभिः सह लीनाः स्युः तत्र सु
षुप्तिप्रलययोः क्रमात् मधुनि सर्वरसा इव सरितः समुद्र इव लीयंते १८ अथेदानीं संसारनिवृत्तये भगवद्भावं श्रुतयः विदधतीत्याह
हे ईश जीवेषु त्वन्मायया भ्रमणं ज्ञात्वा सुधियः त्वयि भावं कुर्वंति एवं त्वां भजतां भवभयं न स्यात् कुतः यस्मात् नवभ्रू भंगरूपः का
लः अभक्तेष्वेव भवभयं करोति अतः त्वं भजंतीति १९ अथ श्रुतयः गुरूपसदनं विदधतीत्याह हे अज ये पुरुषाः गुरोश्चरणं हित्वा जि
तेंद्रियप्राणैर्नरैरपि दुर्दमनं मनोरूपं तुरंगं नियंतुं प्रयतंते ते बहुव्यसनाकुलाः संतः इह संसारे दुःखमेवाप्नुवंति यथा अकृतकर्णधा
राः वणिजः तद्वत् गुरुणा दर्शित हरिभजन स्फुरखानुभूतौ तु स्वतएव मनोनिश्चलं भवति नान्यथेति २० अथ श्रुतयः भक्तेः अंगं वैरा-
ग्यं विदधतीत्याह हे ईश स्फुरस्वरूपे त्वयि सति नृणां तुच्छैः स्वजनसुतदेहादिभिः कः उपयोगः एवं सत्यं परमार्थसुखं अजानंतः अतए
व स्त्रिया सह मिथुनी भूय वर्तमानान् पुरुषान् इह संसारे को नु अर्थः सुखयति न कोपि अतस्त्वद्भजनमेवोचितम् २१ अथ श्रुतयः स
त्संगेन तत्वज्ञानं दृढं स्यात् इत्याहुः मुनयः स्वयं पूता अपि भुवि पुण्यतीर्थक्षेत्राण्येव सेवंते यतः तत्रैव सत्संगो भवति एवं भूता ये तेन पु
नः गृहान् उपासते एवं च सकृदपि त्वयि ये मनो दधति ते पि गृहाद्यासक्ताः न भवंति किं पुनः एवं भूताः इति २२ इदं विश्वं सत्यरूपात् उत्पन्नं-
अतः असदिति चेन्न यतः तर्कबाधितम् एवं प्रपंच सत्वे साधनाभावात् तदसत्वे च साधनाधिक्यात् प्रपंचो मिथ्यैव स्रजि सर्प इव २३

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

किंच इदं विश्वं सृष्टेः पूर्वं नासीत् तथा लयानंतरमपि न भविष्यति अतो मध्येपि न तथापि त्वयि सत्ये मिथ्यारूपमेवेदं भाति यथा घटा-
दीनां कार्याणां नाममात्रता मृदा ह्येव सत्यं तद्वत् अतः येइदं सत्यमिति जानंति ते अज्ञाः २४ अथ जीवेश्वरयोर्विशेषमाहुः हे ईश यः मा
यया अविद्यां आलिंगेत् ततः देहादीन् सेवमानः पिहितानंदादिगुणः सन् संसारं प्राप्नोति सः जीवः तदर्थं कर्मकांडं जुषन् संसारं भजति त्वं तु मायां तां जहा
सि कथम् अपरिमितैश्वर्यः सन् कंचुकं अहिरिव अतः तवैव सेव्यत्वमिति २५ किंच हे ईश ये दांभिकाः यतयः हृदि स्थिताः कामवासनाः यदि नो
त्पाटयंति तर्हि तेषां हृद्गतोपि त्वं दुष्प्रापः कथम् विस्मृतकंठमणिरिव किंच तेषां इहामुत्र दुःखमेवेत्याह अत्र लोकाराधनधनार्जनादिक्लेशान्
दुःखम् परत्र भवतो दुःखमिति २६ ननु यतेः न किमपि कृत्यमस्ति किमिति वृथा शप्यते तत्राह हे भगवन् त्वज्ज्ञानवान् पुमान् प्राचीनपु
ण्यापुण्यकर्मणोः सुखदुःखसंबंधान् नानुसंधत्ते तथा विधिनिषेधलक्षणा गिरश्च इदं तस्य युक्तम् यतः मनुजैः नित्यं श्रवणेन चेतसि
धृतस्त्वं तेषां अपवर्गरूपा गतिर्भवसि अतः योगच्छद्मनां इंद्रियलालसानां उभयतोप्यसुखम् २७ किंच हे भगवन् ब्रह्मादयो द्युपतयः
ते अंतं न प्रापुः कुतः अनंतत्वात् आस्तां तेन प्रापुरिति यतः त्वमपि स्वांतं न यासि कुतस्तर्हि मे सर्वज्ञता तत्राह अंताभावेन नहि शशशृंग
ज्ञानं सार्वज्ञं हंति अनंतत्वमेवाह यस्य तव मध्ये ब्रह्मांडसमूहाः खे रजांसीव परिभ्रमंति अतः श्रुतयः अतन्निरसनेन तात्पर्यवृत्त्या त्व
यि पर्यवस्यंति एवं तावत् अवधिभूते त्वयि श्रुतयः फलंतीति २८ श्रीभगवानुवाच हे नारद एवं ब्रह्मपुत्राः आत्मानुशासनं श्रु-
त्वा सनंदनं आनर्चुः एवं सर्वश्रुतिपुराणरहस्यतात्पर्यं सनकादिभिः उद्धृतं हे नारद एतत् त्वं धारयन् गां कामं चर श्रीशुक उवाच
एवं नारायणेनादिष्टं गृहीत्वा नारदः पूर्णः सन् आह नारद उवाच यः ईशः भूतानां मोक्षार्थं कलाः धत्ते तस्मै कृष्णाय नमोस्तु एवं नार
दः नारायणं तच्छिष्यांश्च नत्वा मम पितुः आश्रमं अगात् तेन सभाजितः व्यासाय नारायणमुखोक्तं अवर्णयत् एवं हे राजन् त्वया ब्रह्मणि

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

श्रुतिः कथंचरेत् इतियत्पृष्टं तदुक्तम् किंच यः ईशः प्रकृतिपुरुषेश्वरः इदंसृष्ट्वा तदनुप्रविश्य शरीराणि कृतानानि शास्ति यंप्राप्य जीवः अविद्यांजहाति तंहरिं अजस्रं ध्यायेत् ५० इतिश्रीभागवते महापुराणे दशमस्कंधे पारमहंस्यांसंहितायां वैयासिक्यां वेदस्तुतिर्नाम सप्ताशीतितमोऽध्यायः ८७ राजोवाच हेब्रह्मन् देवासुरमनुष्येषु अशिवंशिवं ये भजंतितेप्रायः भोगिनोधनिनश्चभवंति येलक्ष्मीपतिंहरिं भजंतितेतुन एतत्ज्ञातुं इच्छामः श्रीशुकउवाच हेराजन् शिवः शश्वत् शक्तियुतः अतःतंभजन् संपत्तिंप्राप्नोति हरिस्तुनिर्गुणः अतःतंभजन् निर्गुणोभवति हेराजन् अश्वमेधेषु सत्सु युधिष्ठिरः अच्युतंइदमेव-अपृच्छत् तदाभगवान् तस्मैआह श्रीभगवानुवाच हेधर्म अहंयं अनुगृण्हामि तस्यधनं शनैः हरिष्ये ततः अधनंतंस्वजनाः त्यजंति ततःसः धनेहयायदानिर्विण्णःस्यात् तदाअनुग्रहं करिष्ये अतोमांहित्वाजनः अन्यंभजते श्रीशुकउवाच हेराजन् शापप्रसादयोरीशाब्रह्मविष्णुशिवादयः तेषांमध्ये सद्यः शापप्रसादकः शिवोब्रह्माचनअच्युतः हेराजन् अत्रैवोदाहरंतीममितिहासंपुरातनं वृकासुरायगिरिशोवरंदत्वापसंकटम् एकदाशकुनेःपुत्रः वृकोनाम असुरः पथिनारदं दृष्ट्वात्रिषु देवेषुमध्ये शीघ्रं कः तुष्यतीति प्रपच्छ तदानारदः आह गिरिशंदेवंभजसः अल्पाभ्यांगुणदोषाभ्यां आशुतुष्यति कुप्यति सः एकदारावणबाणासुरयोःतुष्टःसन् अतुलं ऐश्वर्यंदत्वासंकटं आप इत्यादिष्टो वृकासुरः केदारेगत्वास्वमांसेन अग्निमुखेहरंजुह्वन् सन् देवप्राप्तिं अप्राप्य सप्तमेहनिशिरः छेत्तुंउद्यतोभूत् तदामहाकारुणिकः शिवः अनलात्उत्थितःसन् तंदोर्भ्यां भुजयोःनिगृह्यन्यवारयत् आहच हेवृक अलं अलं यथाकामंवरं वृणीष्वतुभ्यं ददामि एवंउक्तःसः पापीयान् भूतभयावहंवरं वव्रे हेहर अहंयस्ययस्यशीर्षिकरंधास्येसःम्रियतांइति तच्छ्रुत्वारुद्रः दुर्मनाइवभूत्वा अहेः अमृतमिव तस्मै वरंददौ ततोवृकः गौरीहरणलालसःसन् तद्धरपरी

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

क्षार्थंशंभोः मूर्ध्निहस्तंधातुंआरेभे तदास्वकृतात् भीतःशिवः संत्रस्तःसन् ब्रह्मांडं अधावत तदादेवाः प्रतिविधिंअजानंतः संतः तू-
ष्णींआसन् ततःशिवःवैकुंठंअगमत् तत्रनारायणःआस्ते तदाहरिः तंशिवंव्यसनिनं दृष्ट्वामेखलाजिनदंडाद्यैः बटुर्भूत्वासन्मुखंएत्य
तंअभिवाद्यामास श्रीभगवानुवाच हेवृकत्वंदूरंआगतःअतःश्रांतोसि तस्मात्क्षणंविश्रम्यताम् किंच तवयत्निश्चितंतत्
भण्यताम् श्रीशुकउवाच एवंभगवतापृष्टःवृकःयथापूर्वंअनुष्ठितंतस्मैअब्रवीत् श्रीभगवानुवाच हेवृकएवंचे
त्तर्हिशिववाक्यंवयंनश्रद्दधीमहि यःदक्षशापात् पैशाच्यंप्राप्तःतवतस्मिन्शिवेविश्वासश्चेत् तर्हिस्वशिरसिहस्तंन्यस्यप्रतीयताम्
शंभोर्वचः असत्यंचेत्स्यात् तर्हिएनंजहि इत्यादिभगवद्वाक्यैर्मोहितःसः कुमतिः स्वशिरसिहस्तंव्यधात् तदेवभिन्नशिराःसन् अ
पतत् ततःजयशब्दोनमःशब्दःसाधुशब्दोऽभवत् दिविदेवादयःपुष्पवर्षाणिमुमुचुः एवंशिवःसंकटात्मोचितः ततःमुक्तंगिरिशंभ
गवान् आह अहोदेवमहादेवअयं पापःस्वपापेनैवंहतः हेईशमहत्सुकृतापराधःपुमान्कोनुक्षेमीस्यात् एवंयःहरेःशिवमोचनच
रितंकथयेत्शृणोतिवासः अरिभयात् संसाराच्चमुच्यते ४० इतिदशमेऽष्टाशीतितमः ८८ श्रीशुकउवाच हेराजन्एक
दासरस्वत्याःतटेऋषयः सत्रंअकुर्वत तदात्रिष्वधीशेषुकोमहानितितेषांवितर्कः समभूत् ततः तेऋषयःतज्जिज्ञासयाभृगुंप्रेषयामा
सुः ततःसःभृगुःब्रह्मणःसभांगत्वातत्सत्वपरीक्षार्थंतस्मैनमस्कारादिकंनचक्रे ततःब्रह्मातस्मैभृगवेक्रुद्धोपिआत्मन्युत्थितं मन्युं
स्वयमेव अशीशमत् ततःसःभृगुःकैलासंअगमत् तदाशिवः उत्थायमुदातंपरिरब्धुंआरेभे तदाभृगुः त्वंउत्पथगइतिमुक्त्वातत्
नैच्छत् तदाक्रुद्धः शिवःशूलंउद्यम्यतंहंतुंआरेभे तत्दृष्ट्वापार्वतीशिवस्यपादयोःपतित्वासांत्वयामास ततोभृगुः वैकुंठंगत्वा- ३३
श्रियःउत्संगेशयानंविष्णुंपदावक्षस्यताडयत् तदाहरिः लक्ष्म्यासहउत्थायतल्पात् आशुअवरुह्यतंशिरसानत्वास्वागत-

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

मित्युक्त्वा हे ब्रह्मन् आसने निषीदेत्याह हे ब्रह्मन् आगतान् वः अजानतां नः क्षंतुं अर्हथ हे मुने ते चरणौ अतीव कोमलौ इत्युक्त्वा विप्र-
चरणौ स्वहस्तेन मर्दयन् आह हे मुने पादोदकेन सह लोकं मां पुनीहि हे भगवन् अद्य अहं लक्ष्म्याः एकांतभाजनं आसम् हे[illegible]
त्वाद् हत पापस्य मे उरसि इदं लांछनं वत्स्यति श्रीशुकउवा० एवं वैकुंठे ब्रुवति सति भृगुः तन्मंद्रया गिरा निर्वृतः सन् तूष्णीमा
स ततो भृगुः पुनः सत्रं एत्य स्वानुभूतं सर्वं अवर्णयत् तन्निशम्य मुनयः विस्मिताः संतः विष्णुं भूयांसं निश्चितवंतः यतः शांतिः अ-
भयं किंच यतः धर्मः ज्ञानं किंच यं साधूनां गतिं आहुः किंच यस्य सत्वं प्रिया मूर्तिः यस्य इष्टदेवताः ब्राह्मणाः स एव श्रेष्ठः श्रीशुकउ०
एवं सारस्वताः विप्राः पुरुषस्य सेवया सद्गतिं गताः सूतउवाच हे ऋषयः एतत् श्रीशुकमुखपंकजात् उद्भूतं हरेः प्रशस्तं यशः
संसारी सेवते सः मुक्तो भवति श्रीशुकउवा० एकदा द्वारवत्यां विप्रपत्न्याः पुत्रः जातमात्रः सन् भुवं स्पृष्ट्वा ममार ततः विप्रः तं मृतपुत्रं गृही
त्वा राजद्वारि निधाय विलपन् इदं प्रोवाच ब्रह्मद्विषः शठधियो लुब्धस्य विषयात्मनः क्षत्रबंधोः कर्मदोषात् पंचत्वं मे गतो र्भकः २३ एवं द्वि
तीयं तृतीयं पुत्रं राजद्वारे त्यक्त्वा तां गाथां अगायत कदाचित्केशवांतिके स्थितः अर्जुनः तां गाथां श्रुत्वा ब्राह्मणं सम भाषत हे ब्रह्मन्
त्वन्निवासे इह धनुर्धरः नास्ति किं किंच यस्मिन् राज्ये धनदारादिवियुक्ताः ब्राह्मणाः शोचंति ते राजानः राजवेषेण नटा इव जीविकां
संपादयंति हे ब्रह्मन् वां प्रजाः अहं रक्षिष्ये हतप्रतिज्ञश्चेत् अग्निं प्रवेक्ष्ये ब्राह्मणउवा० हे अर्जुन संकर्षणः वासुदेवः प्रद्युम्नः अनि
रुद्धः एते मे प्रजाः त्रातुं न शक्नुवंति तत्कर्म बालिश्यात् त्वं कथं चिकीर्षसि अतः वयं ते वचः न श्रद्दध्महे अर्जुनउवा० हे ब्रह्मन् अहं संकर्ष-
णो न कृष्णो न तर्हि यस्य गांडीवं धनुः त्र्यंबकतोषणं वीर्यं च सोहं अर्जुनः युद्धे मृत्युं विजित्य तव प्रजां आनेष्ये एवं अर्जुनेन विश्वासं प्रापितः विप्रः
स्वगृहं जगाम ततः सः द्विजः भार्यायाः प्रसूतिकाले आगते सति मृत्योः प्रजां पाहि इति अर्जुनं आह ततोऽर्जुनः आचम्य शिवं नत्वा दिव्यास्त्रा-

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

णि स्मृत्वा गांडीवं आददे ततः सूतिकागारं शरैः आवृत्य शरपंजरं चकार ततः विप्रपत्न्याः कुमारः संजज्ञे सः कुमारः सदेहः अदर्शनं
आपेदे तदा विप्रः कृष्णसन्निधौ अर्जुनं निंदन् आह अहो मे मौढ्यं पश्यत योऽहं क्लीबकत्थनं श्रद्दधे अहो यस्य प्रजाः रक्षितुं कृष्णाद्
यो न शेकुः ताः अन्यः कः रक्षिष्यति एवं मृषावादं अर्जुनं धिक् तस्य धनुः धिक् एवं विप्रे शपति सति अर्जुनः विद्यां आस्थाय यमपुरीं
आशु ययौ तत्र विप्रापत्यं अदृष्ट्वा ऐंद्रीं अगात् एवं अग्निनिर्ऋतिसोमवायुवरुणानां पुरीः रसातलं स्वर्गं अन्यस्थानानि च गत्वा-
अलब्धद्विजपुत्रः सन् पुनः एत्य अग्निं विविक्षुः सः कृष्णेन निषेधितः ततो भगवान् आह हे अर्जुन अहं द्विजपुत्रान् दर्शये इत्युक्त्वा
अर्जुनेन सह दिव्यं रथं आस्थाय प्रतीचीं दिशं गत्वा सप्तद्वीपान् सप्तसमुद्रान् सप्तगिरीन् लोकालोकं च अतीत्य महत् तमः विवेश
तदा अश्वाः भ्रष्टगतयो बभूवुः भगवान् कृष्णः तान् दृष्ट्वा स्वचक्रं पुरः प्राहिणोत् ततः घोरं तमः विदार्य सलिलं प्रविष्टः तत्र सलि
ले महाकालपुरं दृष्ट्वा तस्मिन् महाभीमं शेषं ददर्श ततः शेषदेहे स्थितं विभुं अष्टभुजं प्रसन्नवक्त्रं सुनंदादिभिः सेव्यमानं परमे
श्वरं दृष्ट्वा अर्जुनः कृष्णश्च तं ववंदे ततो भूमा तौ प्रति आह भो कृष्णौ एते द्विजपुत्राः युवयोः दिदृक्षया आनीताः युवां धर्मगुप्तये भुवि
अवतीर्णौ अतः भूमेः भारभूतान् असुरान् हत्वा शीघ्रं मे अंतिके आगच्छतम् इत्यादिष्टौ तौ ओमित्युक्त्वा भूमानं नत्वा द्विजपुत्रान्
गृहीत्वा स्वकं धाम आगत्य विप्राय पुत्रान् प्रददतुः ततः पार्थः वैष्णवं धाम दृष्ट्वा विस्मितः सन् पुंसां यत्किंचित् पौरुषं तत् कृष्णानु
कंपितं मेने भगवान् एवं अनेकानि वीर्याणि दर्शयन् विषयान् भुंजन् सन् विप्रादिषु अखिलान् कामान् ववर्ष एवं अधर्मिष्ठान् नृपा
न् हत्वा अर्जुनादिभिश्च घातयित्वा युधिष्ठिरादिभिः धर्मं वर्तयामास ६४ इति दशमे एकोननवतितमः ८९ श्रीशुक उवा॰ एकदा ३४
द्वारकायां श्रीकृष्णः सुखं निवसन् षोडशसहस्रस्त्रीणां वल्लभः तावद्रूपः सन् तासां गृहेषु रेमे तथा कमलरेणुभिः वासिताऽमलतोयेषु ह्रादि

CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

नीषुजलंविगाह्यस्त्रीणांकुचकुंकुमैर्लिप्तांगःसन्ताभिःसहविजहार तदागंधर्वैःगीयमानःस्त्रीभिःस्मरेचकैःसिच्यमानःसन्स्वयंताः
प्रतिसिंचन्चिक्रीडे तदाताःस्त्रियःस्मरेचकजिहीर्षयाकांतंउपगुह्यजातस्मरोत्सवलसद्वदनाःविरेजुःतदाश्रीकृष्णःस्त्रियश्चअलंकार
वासांसिददुःएवंविहरताकृष्णेननर्मक्ष्वेलिपरिष्वंगैःहृतधियःस्त्रियःश्रीकृष्णंचिंतयंत्यःसत्यःयानिवाक्यानिऊचुःतानिमत्तःशृणु म
हिष्यऊचुः हेकुररिश्रीकृष्णोस्वपितिसतित्वंनिद्राभंगंकुर्वतीसतीवयमिवविलपसि एतत्तव अनुचितं किंच हेचक्रवाकित्वंअदृष्टबंधुः
सतीनेत्रेनिमील्यरोरवीषि अतःवयमिवअच्युतपादजुष्टांस्रजंकबरेण वोढुंइच्छसिकिम् भोउदन्वत्अलब्धनिद्रःसन्तदाक्रोशसि अतः
अस्माभिःप्राप्तांदशांत्वमपिप्राप्तोसिकिं अहोकष्टं हेइंदोत्वंयक्ष्मणागृहीतःअतएवक्षीणःसन्स्वकिरणैःतमःनक्षिणोषि नत्किंकृष्णग
दितानिविस्मृत्यतच्चिंतयावयमिव क्षीणोसिकच्चित् हेमलयानिलतव अप्रियंअस्माभिःकिंकृतम् यःत्वंकृष्णाकटाक्षैर्भिन्नेनःहृदि
स्मरंप्रेरयसि तन्नुतवानुचितम् हेमेघत्वंश्रीकृष्णस्यसखाअसि अतःवयमिवतंध्यात्वा अत्युत्कंठःसन्बाष्पधाराःमुहुःमुहुःविसृ-
जसि अहोएतत्प्रसंगःदुःखदोस्ति हेकोकिलत्वंकृष्णस्यशब्दाइवशब्दान्भाषसे अतःतेप्रियंअद्यकिंकरवाणि हेपर्वतत्वंनचलसि
नवदसितत्किंकृष्णांघ्रिंस्तनैःधर्तुंवयमिवकामयसे हेनद्यःवयंकृष्णस्यप्रणयावलोकंअप्राप्ययथाकृशाःस्मतद्वत्यूयमपिशुष्य-
त्ह्रदाःस्थ हेहंसतवस्वागतम् अत्रास्यताम् पयःपिबशौरेःकथांब्रूहि त्वांकृष्णादूतंविदामसःस्वस्त्यास्ते हेक्षौद्रसःप्राक्रहसिउ
क्तंतत्स्मरतिकिंओंइतिचेत् आहुःवयंतंकस्मात्भजामःअहोसःयुष्मान्आह्वयतितर्हितंआलापय एवं माधव्यःईदृशेनभावेन
परमांगतिंलेभिरे यःश्रुतमात्रोपिस्त्रीणांमनःकर्षतिसःभगवान्आत्मानंपश्यंतीनांमनःकर्षतीतिकिंवक्तव्यम् किंच याःस्त्रियःजग
द्गुरुंपर्यचरन् तासांतपःकिंवर्ण्यते एवंभगवान्वेदोक्तंधर्मंअनुतिष्ठन्गृहंधर्मार्थकामानांपदमिति अदर्शयत् एवंगृहस्थाश्रमध



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri

र्मेआस्थितस्यकृष्णस्य अष्टोत्तरशताधिकषोडशसहस्रस्त्रियः आसन् तेषांमध्ये रुक्मिण्यादयः अष्टौ प्रागुक्ताः तेषांपुत्रा प्रो-
क्ताः हेराजन् श्रीकृष्णः एकैकस्यांदशदशपुत्रान् अजीजनत् एवंअष्टोत्तरशताधिकषोडशसहस्रस्त्रीणांपुत्राः लक्षमेकंअशीत्यु
त्तरैकषष्टिसहस्राणि भवंति तेषांमध्ये अष्टादशमहारथाः तन्नामानिशृणु प्रद्युम्नः१ अनिरुद्धः२ दीप्तिमान्३ भानुः४ सांबः५ म-
धुः६ बृहद्भानुः७ चित्रभानुः८ वृकः९ अरुणः१० पुष्करः११ देवबाहुः१२ श्रुतदेवः१३ सुनंदनः१४ चित्रबाहुः१५ विरूपः१६ कविः१७ न्यग्रो
धः१८ एतेषांमध्ये प्रथमः प्रद्युम्नः पितृवत् आसीत् सः रुक्मिणः दुहितरंउपयेमे तस्मात् अनिरुद्धो भूत् सः रुक्मिणः पौत्रींउपयेमे
त॰ वज्रः यः मौशलात् अवशेषितः त॰ प्रतिबाहुः त॰ सुबाहुः त॰ शांतसेनः त॰ शतसेनः एतस्मिन् कुले अल्पधनप्रजायुर्वीर्याः अब्र-
ह्मण्याश्च नजज्ञिरे हेराजन् यदुवंशप्रसूतानांपुंसांवर्षशतैरपिसंख्याकर्तुंनशक्यते अपरिमितानांयदुकुमाराणां आचार्याः तिस्रः
कोट्यः अष्टाशीतिशतानिच आसन् इतिश्रुतम् हेराजन् यादवानांसंख्यानं कः करिष्यति यत्र अयुतानांअयुतलक्षेण सः आहुकः
आस्ते किंच हेराजन् देवासुरयुद्धे ये मृताः दैत्याः ते मनुष्येषु उत्पन्नाः संतः प्रजाः बबाधिरे तेषांनिग्रहाय हरिणाप्रोक्ताः देवाः यदोः कु
ले अवतीर्णाः तेषांएकाधिकंशतंकुलानि आसन् तेषांमध्ये प्रभुत्वेन भगवानासीत् यादवाः तंकृष्णंपरमात्मानंनविदुः हेनृपयदुषु
यत्कृष्णकीर्तिरूपंतीर्थंजातंतत् गंगारूपंतीर्थं अल्पंचक्रे एवंभूतस्यक्षितिभारहरणादिनचित्रम् हेराजन् सः श्रीकृष्णः स्थिर
चरवृजिनघ्नः सन् जयति एवंभूतस्यश्रीकृष्णस्यभक्तिं इच्छन् तत्कर्माणिशृणुयात् यतः मर्त्यः श्रीकृष्णकथाश्रवणकीर्तनचिंत
यातद्धामएति ५२ इतिश्रीभागवतेमहापुराणेदशमस्कंधेनवतितमोऽध्यायः ९० छ छ समाप्तोयंस्कंधः छ छ



CC-0.Courtesy Shri K.S.Parihar Librarian Government District Library Varanasi. Digitized by eGangotri